॥श्रीकाशीजीमेंमहल्लाहोदकटोरातिलोकनाथकेफाटककेभीतररामदाससावकेमकानमेंसूर्य्यप्रभा
करछापाखानेमेहजारीलालगनेसप्रसादकेइहांजैमिनिसूत्रनीलकंठीटीकासंयुक्तछापागया लिखा
वैजनाथजोसीनेछापनेवालारामफलकारीगर जिस्कोलेनाहोयसोचांदनीचोकमेंकुंजगलीकेपश्चि
मफाटककेपासहजारीलालगनेसप्रसादकेदुकानपरमिलैगा मितिफाल्गुनशुक्ला ११ सम्वत १९३५मं·॥

॥श्रीगणेशायनमः॥सृष्टिस्थित्यंतकर्त्रीहरिहरविधिभिः सेवितानंददात्रीनानातंत्रोक्तमार्गैर्मुनिभिरपिधियाभालचंद्रोज्वलांगीआ
रक्ताभात्रिनेत्राशिवशवनिलयाराजराजेश्वरीसावाचंनोस्यातनोतुप्रतिपदकठिनेजैमिनेःसूत्रसंघे १ विवस्वद्दंशाग्र्यावनिपतिवरश्रीरणजि
तोदयांभोधेर्वाचातवकरुणयाजैमिनिमुनेः निरालंबेशास्त्रेजननिगिरिजेयास्यतिनकिंसुदीकांमेकामोहृदिसमभिपूर्तिरचयितुं २ अथप्रा
क्तनकर्मज्ञानानुष्ठेयकाशीवासादिना जगदुद्धारंचिकीर्षुःकरुणासिंधुजैमिनिमुनिः प्रेप्सितग्रंथप्रतिबंधकोपशमनायश्रीशंकरप्रणाति
पूर्वकंसकललोकशुभाशुभसूचकजातकशास्त्रमनुष्ठातुंप्रतिजानीते॥उच्चनत्पदंउपदंतस्येशः शंकरस्तंव्याख्यास्यामः नमस्कुर्मः उक्ता

॥श्रीगणेशायनमः॥ उपदेशंव्याख्यास्यामः १ अभिपश्यन्त्यृक्षाणि २ पार्श्वभेच ३ ॥

रः शंकरः प्रोक्तइत्येकाक्षरकोशः प्रकृतार्थस्तुउपदिश्यतेप्राक्तनशुभाशुभकर्माननेत्युपदेशोजातकशास्त्रविशेषस्तंव्याख्यास्यामःकथ
यिष्यामइतिनन्वस्मिन्शास्त्रेकिमन्यशास्त्रतोदृष्टिर्विलक्षणोतान्यशास्त्रप्रसिद्धैवेतिसंशयंपरिहरन्नाह १ ऋक्षाणिराशयः अभि
सम्मुखंपार्श्वभेपार्श्वराशीचपश्यंति अवलोकयंतिक्रमतश्चरेऽष्टमपंचमैकादशराशयःस्थिरेषष्ठतृतीयनवमराशयःद्विस्वभावे रामः
सप्तमचतुर्थदशमराशयस्तथाभवन्तीतिदृष्टिचक्रेद्रष्टव्यं वृद्धकारिकाच चरंधनंविनास्थास्नुस्थिरमंत्यं। विनाचरं युग्मंस्वेनविनायु १
ग्मंपश्यतीत्ययमागमइति तदर्थसंग्रहः चरानाग ८ बाणे ५ श ११ राशीन्स्वनोवैस्थिराः षट् ६ ॥ ६ ॥ ६ ॥

तृतीयां ३ कर्क ४ राशीन् क्रमेणास्त ततः″शैल भं ७ वेद ४ भं पंक्ति १० भं चक्रमादितिस्तभावाः प्रपश्यंतिपूर्णामितिराशिषु सिद्धं दृष्टदृश्यभावं खेटे ष्वतिदिशति। तन्निष्ठाः राशिस्थिताग्रहास्तद्वत् ते राशिभिस्तुल्यं यथा भवति तथा खस्थितराशिवदेव खतोष्टमादिराशीस्तन्निष्ठग्रहांश्चप। श्यंतीत्यर्थः″तथाचोक्तं वृद्धैः चरस्थं स्थिरगः पश्येत्स्थिरस्थं चरराशिगः उभयस्थं तूभयगो निकटस्थं विनाग्रहं॥ शुभार्गलं धनसमृद्धि रि त्यादिसूत्रेष्वर्गलपदसंकेतस्याकांक्षां निवर्तयन्नाह ४ विचाराश्रयीभूतस्य राशेर्निध्यातुर्दृष्टुर्ग्रहाद्दारभाग्यशूलस्थाः दारादिपदबोध्याश्च तुर्थद्वितीयैकादशस्थानस्थिताग्रहाविचाराश्रयीभूतराशिद्रष्टुर्ग्रहस्य अर्गलाः अर्गलासंज्ञकाःस्युः अर्गलाकर्तारइतियावत् तन्नुस्थाश्च

**तन्निष्ठाश्च तद्वत्॥४॥ दार४ भाग्य२ शूल११ स्थार्गला निध्यातुः ५″ कामस्था तु भूयसा पापानां ६॥**

द्विभिर्निध्यातुः फलदातुरित्युक्तं त्वयाऽयमर्थः कथं ज्ञातइति चेच्छृणु भय२ पुण्य११ विना४ भावाद्द्रष्टुराहुः शुभार्गलमिति वृद्धवाक्या देव शुभार्गलमर्गलाविप्रतिबंधकत्वमिति″च्छेदो वत्सूत्राणीत्याद्युक्तेः संधिश्छांदसः अत्राक्षरैरेव राशिभावबोधनं मुनेरभिप्रेतमित्य नुपदमेव स्फुटीभविष्यति अस्मिन्ग्रंथे कटपयादिक्रमेणांकाग्राह्याः तत्रापि द्वादशाधिकसंख्यासन्निपाते द्वादशतष्टं कृत्वाऽवशिष्ट संख्याराशिभावबोधिका अत्र प्राच्यकारिका च कटपय वर्गभवैरिह पिंडांत्यैरक्षरैरंकाः नञि च शून्यं ज्ञेयं तथा स्वरे केवले कथितं यथा हारेत्यत्रांकानां वामतागतिरितिरीत्या द्कारस्याष्टसंख्या रकारस्य द्विसंख्येत्यष्टाविंशतिसंख्यामापन्ने पुंजे द्वादशतष्टे चोर्वरिता चतुःसंख्या

पापोभयसाधारणैर्नचोक्तार्गलाप्रतिबंधकमादौवक्तव्यमितिवाच्यंतथासत्यर्गलापदस्यमंडूकप्लुत्यानुवृत्तेरस्वारस्यादर्गलानंतरमेवाह
॥१॥विक्षीणचंद्रभौमशनिराहुकेतुपापयुतबुधानांभूयसावाहुल्येनपापानामितिवहुवचननिर्देशात्त्रिप्रभृतिभिःपापैःकामस्यात्तृतीय
स्थानस्थाऽर्गलाभवतिएकेनपापेनद्वाभ्यांवानेत्यर्थः इयमर्गलापापसंबंधिनीपूर्वातुशुभपापसाधारणीप्रेमनिधिपंडितैस्तुपापानांम
ध्येयोधिकोशकस्तेनतृतीयेर्गलाभवतीति यदुक्तंतत्सूत्राक्षरार्थोन्नायाति पापानांभूयसेत्यनेनपापवाहुल्यंतत्वायातीतिवहुपापकृता।
कामस्यार्गलायानिर्बाधकत्वादेवपृथक्सूत्रमिदंपूर्वार्गलाबाधकान्याह ६ दारेत्यादिपदबोध्यचतुर्थद्वितीयेकादशस्थानस्थितानामर्ग

रिष्फनीचकामस्थाविरोधिनः ७ नन्यूनाविबलाश्च ८ प्राग्वत्त्रिकोणे ९ ॥

लाकर्तृणांखेटानांक्रमेणरिष्फादिपदबोध्यदशमद्वादशतृतीयस्थानस्थिताग्रहाविरोधिनः।अर्गलाप्रतिबंधकाइत्यर्थः।तथाच
दशमादिस्थानेषुग्रहाभावेसत्येवचतुर्थादिस्थानस्थैर्ग्रहैःअर्गलाभवतिनान्यथेतिभावः बाधकबाधकानप्याह ७ अर्गलाकर्तृग्रहे
भ्यः प्रतिबंधकाग्रहान्यूनाअल्पसंख्याकाः द्वौचेदर्गलाकर्त्तारावेकश्चेत्प्रतिबंधकइत्यादिविबलानिर्बलाश्चयदितदाप्रतिबंधकान।
स्युः बलंमग्रेनिरूपयिष्यतिअर्गलास्तत्प्रतिबंधकाश्चवृद्धैरुक्ताः।भय२पुराण११विना४भावाद्दृष्टराहुःशुभार्गलंस्फुटांगान्त्येय९भावा
तुविपरीतार्गलंविदुःद्रष्टुर्दृष्टग्रहस्यद्वितीयादितःशुभार्गलंद्वादशादितोऽशुभार्गलंप्राहुःअर्गलविरोध्यर्गलमेवविपरीतार्गलमित्युच्य

नृती यार्गलामुपदिशति त्रिकोणेपंचमनवमयोः अर्गलातत्प्रतिबंधकस्य प्राग्वत पंचमेग्रहसत्वेऽर्गलानवमेन्यूनसंख्यात्वनिर्बल
त्वदोषरहितग्रहसत्वेऽर्गलाप्रतिबंधकत्वमिति नचदारेत्यादिसूत्रे शांतपदस्यरिष्फेत्यादिसूत्रेथानुपदस्योपादानादेयार्थलाभेसूत्रां
तर निर्माणस्यवैयर्थ्यापत्तिरितिवाच्यं विपरीतंकेतोरितिसूत्रेकेतुकृतव्यत्ययस्यत्रिकोणएववक्तव्यत्वात्साफल्यप्रसंगात अन्यथाद्वि
दारभाग्यशूलेष्वपिकेतुकृतव्यत्ययापत्तिरितिभावः यत्तुकेश्चिदुक्तं प्राग्वदितिसूत्रस्यपृथक्करणसामर्थ्यादप्रतिबंधेयमर्गलेति त
त्र तथासतिकामस्थेतिसूत्रोत्तरमेवप्रसंगात्तन्निर्मितिःस्यादिति विपरीतंकेतोरितिसार्वत्रिकं यदुक्तं तदपिनंकामस्थेतिसूत्रोत्तरं प्राग्वदिति

विपरीतंकेतोः १० आत्माधिकःकलादिभिर्नभोगःसप्तानामष्टानांवा ११ ॥

सूत्रंचेत्तदासार्वत्रिकंस्यात॥ प्राग्वदितिसूत्रानंतरप्रणयनात्तत्रैवास्यप्रवृत्तिरित्यर्थः। विपरीतमितिसूत्रस्योत्तरसूत्रेऽन्वयइतियदुक्तं
तदपिन अष्टानांवेतिपृथक्करणसामर्थ्याद्देवराहोर्न्यूनांशत्वेनकारकत्वलाभादेतदन्वयस्यवैयर्थ्यापत्तिः अष्टानांवेत्यन्यमतंयदुक्तंतत्र
प्रमाणाभावइतिकेतोविशेषमाह१ केतोर्ग्रहस्यनवममर्गलास्थानंपंचमंप्रतिबंधकस्थानंकिंचसतिभुनेस्तात्पर्यंकेतोर्लग्नस्यअस्मिन्ग्रंथे
विशेषतःकारकात्फलादेशेकर्तव्येकारकान्विवक्षुरादावात्मकारकंदर्शयति १० रव्यादिशन्यंतानांसप्तानांराहंतानामष्टानांवामध्येयोन
भोगोग्रहःकलादिभिःकलायाआदयोंशास्तैरंशैः अंशादिभिरितियावत् अधिकः स आत्मा आत्मकारकइत्यर्थः अंशपदंविहायकलादिप

भिरपि साम्ये वक्ष्यमाणवलं नैकतरनिर्णयः तत्र द्वित्र्यादिग्रहाणामंशादिसाम्ये न कारकलोपे वलवत्स्थिरकारकादेव तत्तत्कारकविचारः कर्त्तव्य इति ननु आत्माधिकः कलादिभिर्नभोगोष्टानामित्येव पाठोऽस्तु लाघवात् उच्यते तत्राधिकपदस्य निविष्टत्वाद्राहोस्तु सर्वग्रहांशान्यूनांशतया आत्मकारकतेति सूचनायाष्टानांवेति पृथग्युक्तिः ननु कथं ज्ञातमिति चेन्न राहोर्विपरीतसंचारान्न्यूनत्वेनाधिक्यात् नभोगोष्टानामिति पाठे त्वन्यग्रहरीत्या राहोरप्याधिक्यं प्रतीयेत द्वित्राणां ग्रहाणां त्र्यस्तत्वयोगे प्रसक्ते राहुयोगे विपरीतमिति सूत्रेण राहोर्योगे नापि न्यूनांशस्य त्र्यस्तत्वं स्वस्य तु स्तुतरामिवाल्यांशत्वेन कारकत्वं भवतीत्यर्थः अत्र वृद्धसंमतिः भागाधिकः कारकः स्यादल्पभागोन्त्यकारकः मध्यांशो मध्यखेटः स्यादुपखेटः स एव हीति न च वृद्धवाक्याद्राहोर्न्यूनांशकत्वेनात्मकारकत्वं नापातीति वाच्यं शास्त्रप्रसिद्धतया वालानामपि तथैव बोधाद्विविच्य नोक्तं अत्र वृद्धवाक्यांतरं च॰ मेषाद्यसव्यमार्गेण राहुकेतू नकारकौ अस्यार्थः राहुकेतू मेषाद्यसव्यमार्गेण सव्यं वामं असव्यं दक्षिणं तु असव्यमार्गेण दक्षिणमार्गेण मेषादिक्रममार्गेण कारकौ न विपरीतमार्गेण तु भवत एवेति फलितोर्थः अत्र राशिकृतमाधिक्यं न ग्राह्यमिति संप्रदायः अथवा अंशादिभिर्ग्रहद्वयसाम्ये सप्तमकारकाभावे राहुरपि ग्राह्यः तस्मादष्टानांवेति गौणः कल्पो निरुक्तः यत्तु श्रेममिधिपथे विपरीतं केतोरिति सूत्रं देहलीदीपकन्यायेनात्रान्वेतीत्युक्तं तदयुक्तं रव्यादिक्रमगमनाद्रव्यादौ केतुनिरूपणस्यायोग्यत्वात् राहोरंशाधिक्येन कारकत्वाकेतोस्तु न्यूनांशत्वेन कारकतेति वाधिमत्त्वाच्च राहोरधिकांशत्वे सति केतोरपि तथात्वात् नवानामिति तु कथं नोक्तमिति चेन्न राहुकेत्वोरंशादिसाम्ये न कारकांतराभावादष्टानामित्येवोचितमित्यलमतिविस्तरेण आत्मकारकस्योत्कर्षं दर्शयति ११ ॥

स आत्मकारको बंधमोक्षयोरपि स्वामी भवति नीचराशिपापयोगो म्लादिराशिशुभयोगैरिति विशेषः नीचपापयुक्तः कारकः स्वदशांतर्दशासु बंधनादिदुःखदः स्यात् उच्चादिशुभयुतस्तु ग्रहांतरबलेन बद्धस्यापि मोक्षणाकर्त्ता भवति यद्वा प्रतिकूलकः आत्मकारकः पापकर्मप्रवृत्ति द्वारा संसाररूपबंधनदः स्यात् अनुकूलस्तु ज्ञानकाशीवासादिभिर्मोक्षकर्त्ता स्यादित्यर्थः ॥ अमात्यकारकमाह १२ तस्यात्मकारकस्य अनुपश्चात्सरणाद्गमनान्न्यूनांशतया ऽमात्यः अमात्यकारको भवतीति भ्रातृकारकमाह १३ तस्यामात्यकारकस्यानुसरणादल्पांशतया भ्रातृकारकः स्यात् मातृकारकमाह १४ भ्रातृकारकादल्पांशो ग्रहो मातृकारको भवति पुत्रकारकमाह १५ मातृकारकान्न्यूनांशः पुत्रकारक इ

**स इष्टे बंधमोक्षयोः १२ तस्यानुसरणादमात्यः १३ तस्य भ्राता १४ तस्य माता १५ तस्य पुत्रः १६ तस्य ज्ञातिः १७ तस्य दाराश्च १८ मात्रा सह पुत्रमेके समामनंति १९ ॥**

ति ज्ञातिकारकमाह १६ पुत्रकारकादल्पांशो ज्ञातिकारक इति दाराकारकमाह १७ ज्ञातिकारकान्न्यूनांशः स्त्रीकारकः तस्य दाराश्चेत्यनेनैव सिद्धे चकारो नुक्तसमुच्चयार्थः स्म स्थिरकारकपदोपपदादिभ्योपि स्त्रीविचारः कार्यो न तु दारकारकादेवेति सूचयति पुत्रकारकविकल्पमाह १८ मातृकारकात्पुत्रकारकविचारः कार्य इति केचनाचार्या वदंति कारकद्वयैक्यं वदंतीति यावत् ॥ अथ नित्यकारकान्वक्तुमुपक्रमते तत्रादौ भगिन्यादिकारकान्दर्शयति १९

**आरतो भौमाद्भगिनी सामान्यं श्यालः स्त्री भ्राता कनीयान्कनि ॥**

ष्ठश्चाताजननीमाताएतेविचारणीयाइत्यर्थः मातुलादिकारकमाह २० उत्तरतोभीमाग्निमाद्धुधात् मातुलमातृभगिन्यादयोबंधवोमातृस
जातीयामातृसपत्न्यश्चविचारणीयाः पितामहादिकारकमाह २१ गुरुमुखादेवगुर्वादिभ्यएवक्रमेणपितामहपतिपुत्रादितिज्ञानीयाद्वि
चार्य्यादित्यर्थः॥ ननैवंचेदग्रिमसूत्रेपत्नीपतिःपितराविति वाच्यं मंदात्पुत्रइति तृतीयसूत्रोपादानापेक्षयातथैवसुवचत्वात् उर्वरितं
त्वग्रिमसूत्रेनिबद्धं अन्यथामुखपदंव्यर्थमेवस्यादिति पत्न्यादिषुमुक्तकारकमाह २२ अंतेवासिनःगुर्वग्नेपठितात्तच्छुक्रात् भार्यामा

भगिन्याऽऽरतःश्यालःकनीयाञ्जननीचेति २० मातुलादयोबंधवोमातृसजातीयादित्युत्तरतः २१ पितामहःप
निपुत्राविति गुरुमुखादेवजानीयात् २२ पत्नीपितरौश्वशुरौमातामहाइत्यंतेवासिनः २३ मंदोऽज्यायान्ग्रहे
षु २४ प्राचीवृत्तिर्विषमभेषु २५ परावृत्त्योत्तरेषु २६ ॥ ननुपितृश्वशुरश्वश्रूमातामहाविचार्याइत्यर्थः ननुकारकत्वेनद्वि
त्रादिग्रहसन्निपातेकमालंव्यविचारइतिसंदेहेकलाधिक्यवतस्तत्रापिसाम्येनिसर्गबलवतः कार्यइतिरीतिस्तस्माद्ग्रहाणांनिसर्गब
लंसूचयति २३ मंदःशनिःसर्वसुग्रहेषुज्यायान्दुर्बलः तथाचवृद्धज्ञानकैशुक्रबुधगुरुचराद्याद्विजोवीर्यवंतइति तथाचनिसर्ग
बलेशन्यादयः उत्तरोत्तरंबलिनइत्यर्थः अथचरदशावर्षानयनोपयोगितयोजयुग्मराशिभेदेनगणनामुपदिशति २४ विषमभेषु
मेषुमेषमिथुनादिराशिषुप्राचीवृत्तिःक्रमगणनास्यात्॥

मेषवृश्चिकादिरीत्यागणनास्यादिति यावत्॥ उत्तरेषु समराशिषु वृषकर्कादिषु परावृत्त्या व्युत्क्रमेण वृषमेषमीनादिक्रमेण गणना भवती त्यर्थः अत्रापवादमाह २६ ओजराशिषु कचित्क्रमः युग्मराशिषु कचिद्व्युत्क्रमो नेत्यर्थः कुत्रेत्याकांक्षायां परं परा श्रुतार्थेन चिरंतनैरुक्तं क्रमाह वृषे वृश्चिके च व्युत्क्रमात् कुंभसिंहयोरिति सूत्रप्रपफलितार्थसंग्रहस्त्वयं मेषादित्रित्रिभेदेषु यं पदमोजे पदे क्रमात् दशाब्दानयनेकार्यागणना व्युत्क्रमात्समे प्राचीवृत्तिविषमपदे परावृत्त्योत्तरे इति कथं नोक्तमिति चेत् यावदीशाश्रयं पदमृक्षाणामिति वक्तव्यत्वात् देहमिया नोक्तं तथा च मातृधर्मयोः सामान्यं विपरीतमोजकूटयोरिति वक्तव्यत्वाच्चेति अथ तत्तद्राशेर्दशाब्दानयनावधिं दर्शयति

नकचित् २७ नाथांताः समाः प्रायेण २८॥

२७ अत्र राशीनां नाथाश्रयांतरेकाग्राह्याः अत्रानुक्तत्वात् तथाहि क्षितिजसितज्ञचंद्ररविसौम्यसितावनिजाः सुरगुरुमंदसौरिगुरवश्च गृहांशकपा इति नाथानामवस्थानानैयत्येन चरदशोच्यते कुत्र चरदशापदेन व्यवहार इति चेत् जनगतस्तस्युषारूढयोगाद्वि इत्यादौ गृहाणा अत्र समाः अब्दा नाथांताः तत्तद्राशीनां तत्तद्राशिनाथाश्रितराशिपर्यंतं ग्राह्याः इति एवं च नाथे द्वितीये एकाब्दस्तृतीये द्वौ इतिक्रमेण द्वादशे नाथे एकादशाब्दाः तत्तद्राशौ नाथे सति तु द्वादशाब्दा इति विवेकः तदुक्तं प्राच्यैः तस्मात्तदीशपर्यंतं संख्यामत्र दशां विदुः वर्षद्वादशकं तत्र न चेदेकं विनिर्दिशेत्॥ अस्यार्थः॥ तत्तद्राशौ नाथे॥

स्थितेसतिद्वादशवर्षाणि असतितुएकाब्दोग्रह्यइति। अतएवप्रायेणेतिपदेननाथांतराः समाद्दत्यस्यापवादः सूचितः प्रायेणेत्यनेनैव।
स्वामिनउच्चत्वनीचत्वाभ्यामेकैकवर्षवृद्धिह्रासावपिसूचितावेववृश्चिककुंभयोर्द्विनाथत्वमपिसूचितमेवतदुक्तंवृद्धैः उच्चखेटस्यसंख्या
वेवर्षमेकंविनिक्षिपेत् तथैवनीचखेटस्यवर्षमेकंविशोधयेदिति अत्रवृश्चिककुंभयोर्विशेषांवृद्धैरुक्तः कुजसौरीकेतुराहूराजाना
वलिकुंभयोः कुजसौरीकेतुराहुयुक्तौतत्रस्थितौयदिवर्षद्वादशकंतत्रनचेदेकंविनिर्दिशेत्॥ अयमर्थः॥ वृश्चिकस्यकुजकेतूराजा
नौनतुनयोरेकैकमपिकुंभस्यशनिराहूराजानौनत्वेकैकमपि तथाचद्वयोः सत्वेएववर्षद्वादशकं एकैकसत्वेस्वाम्यभावदुक्तप्रकारे
णदशाब्दगणनंकार्यमिति अन्यराशौतदुभयसत्वेनाथांतरादितिरीतिरनुसर्तव्यातयोर्भिन्नभिन्नराशिगत्वेयएवनाथोवलवांस्तत्संख्या
ग्राह्याएतदुक्तंवृद्धैः द्विनाथक्षेत्रयोरत्रनिर्णयः कथ्यतेधुनाएकः स्वक्षेत्रगोन्यस्तुपरत्रयदिसंस्थितः तदान्यत्रास्थितंनाथंपरिगृह्यदं
शांनयेत्॥ स्वक्षेत्रेमिलितावेवस्वामीनस्त्वेकशस्तथा एकस्यस्वगृहस्यत्वंनहिकार्योपयोगिकं द्वावप्यन्यर्क्षगौतौचेत्सग्रहोवलवान्भ
वेत् ग्रहयोगसमानत्वेचिंत्यंराशिवलाद्वलंचरस्थिरद्विस्वभावाः क्रमात्सुर्वलिशालिनः राशिसत्वसमानत्वेवहुवर्षोवलीभवेत् एकः।
स्वोच्चगतस्त्वन्यः परत्रयदिसंस्थितः ग्राहयेदुच्चखेटस्थं राशिमन्यंविहायवैनाथांतरादितिरीत्यायोवहुवर्षवतींदशांकरोतिवहुवर्षोसौस्व 
राशेर्दूरगः स्वगः एवंसर्वसमालोच्यजातस्यनिधनंवदेदितिस्पष्टार्थाश्लोकाः॥ एकः स्वोच्चेत्यस्यार्थः यदितुवहुवर्षदएकोराजापरक्षे 
त्रगः अपरस्तुराजाऽन्यक्षेत्रगएवोच्चगोल्पवर्षदस्तदावहुवर्षदंत्यक्त्वाऽल्पवर्षदमेवोच्च॥

ग्रहमाश्रित्य नायांतादृतिरीत्याऽब्दानयनं कार्यमिति अन्यच्च वृद्धैरुक्तं न्यासयोर्ग्रहहीनत्वे वैकस्यान्येन संयुतौ ग्राह्यो राशिर्ग्रहाभावस्त त्वाम्युच्चगतो यदि एकत्र स्वर्क्षगः खेटश्चान्यत्र द्वौ ग्रहौ यदि ग्रहद्वययुतिं हित्वा ग्राहयेत्पूर्वभं सुधीरिति अयमर्थः न्यासयोः लग्नसप्त मयोर्द्वयोः स्थानयोः ग्रहाभावे अथवा द्वयोर्मध्ये एकस्यान्येन केनचिद्ग्रहेण खेशातिरिक्तेन युतौ सत्यां च तत्रयो राशिर्न्यो येन निर्बलः स राशिस्तद्राशीशे उच्चंगते सति बलवानेव नापरः सग्रहोपि एकत्र राशौ स्वक्षेत्रगो ग्रहः अपरत्र द्वौ ग्रहौ स्तस्तदा सस्वामिकराशिरेव बल वानिति द्वितीयपद्यतात्पर्यं उच्चराशयस्तु अजवृषभमृगांगनाकुलीरा झषवणिजौ च दिवाकरादितुंगाः दशशिखिमनुयुक्तिथींद्रि यांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाइति पंचमे पद्ये क्रमात्प्राक्प्रत्युक्तमिति वक्ष्यमाणसूत्रात् क्रमव्युत्क्रमभेदेन दशाले ख्या आरंभा

यावदीशाश्रयं पदमृक्षाणां २९ ॥

वधिस्तु लग्नमेव चरदशायामत्र शुभः केतुरिति सूत्राद्दस्या दशायाश्चरदशेति नाम बोध्यम् २८ अथाग्रे फलविशेषज्ञापनाय राशीना मारूढापरपर्यायं पदमुपदिशति ऋक्षाणां राशीनां ईशाश्रयं यावत् ईशाश्रय राशिपर्यंतं या संख्या तामीशाश्रयादग्रे प्रगणीय तत्संख्याय स्मिन् राशौ समाप्ता तद्राशिस्तस्य स्वामिकराशेः पदं स्यादित्यर्थः ननु ईशाश्रयादग्रे प्रगणीयेत्यर्थः कथं उच्यते यावांश्चासावीशाश्रयाव दीशः यावदीशः आश्रयो यस्य तद्यावदीशाश्रयं पदमिति समासाल्लभ्यइति तदेव वृद्धैरुक्तं लग्नाद्यावतिथे तिष्ठेद्राशौ लग्नेश्वरः क्रमात्

ततस्तावतिथं राशिं जन्मारूढं प्रचक्षते लग्नाल्लग्नपतिर्यावद्राशिसंस्थस्ततः पुनः ॥

तावानृषिभिरारूढः कथितः सर्वशास्त्रतः यदा लग्नाधिपो लग्ने सप्तमे वास्थितो यदि आरूढं लग्नमेवात्र निर्दिष्टो कालवित्तमः दृढं
चश्लोकेन लग्नपदं निरूक्तं यदांतराणामप्युपलक्षणं बोध्यम् श्लोकाः स्पष्टार्थाः २९ अथारूढोदाहरणरूपं सूत्रद्वयमाह लग्नात्स्वा
स्थे चतुर्थस्थे लग्नस्वामिनि दाराः सप्तमस्थो राशिर्लग्नारूढं भवति ३० लग्नात्सुतस्थे सप्तमस्थे लग्नस्वामिनि जन्मलग्नमारूढं भवती
त्यर्थः यावद्दिशेनि सूत्रेणैव सिद्धे एतत्सूत्रद्वयमुदाहरणद्वारा स्पष्टार्थं पठितमिति यत्तु आद्यैः स्वस्थे दारा विचारणीयाः सुतस्थे भ्रातृ
जन्मविचार्यमित्युक्तं तदसंगतमेव प्रतिभातीति ३१ अथात्र भावराशिबोधकपदानामन्यशास्त्रतो विलक्षणत्वमाशंक्याह भावाराशयश्च सव
र्णाः वर्णेन सहिताः सवर्णाः ए ॥ स्वस्थे दाराः ३० सुतस्थे जन्म ३१ सर्वत्र सवर्णा भावा राशयश्च ३२ ॥ कादि संख्याबोधकाक्षरगम्याः
सर्वत्र ग्रंथे न तु सिद्धमन्यदिति वक्ष्यमाणत्वात् शिवतांडवादिग्रंथेषु कटपयादिवर्णैः सूचितसंख्याप्रसिद्धेर्वक्तिमर्थमिदं सूत्रमिति न च भाव
राशिग्रहसाधारण्येन बोधः स्यादिति वाच्यं भावराशीनां संख्याप्राधान्यत्वाद्ग्रहाणां तु ग्रहवाचकपदप्राधान्यत्वात्साधारण्येन बोधो न स्या
त्किमर्थं सर्वत्रेति सूत्रमित्याशंक्य वर्णद्राशिपरमेतदिति प्रकारांतरेणैतत्सूत्रं व्याख्यायते सर्वत्र सवर्णा भावा राशयश्च भावा राशयः
यश्च सवर्णाः वर्णेन वर्णादेन सहिताः सवर्णा भवंति वर्णादानयनप्रकारस्त्वित्थं वृद्धैरुक्तः ओजलग्नप्रसूतानां मेषादेर्गणयेत्क्रमात्
युग्मलग्नप्रसूतानां मीनादेरपसव्यतः मेषमीनादितो जन्मलग्नांतं गणयेत्सुधीः तथैव होरालग्नांतं गणयित्वा ततः परं पुंस्त्वे नस्त्री तथा

तर्हि संख्ये योजयीत वैजात्ये तु वियोजयेत मेषमीनादितः पश्चाद्यो राशिः स तु वर्णदः ओजयुग्मलग्नानुरोधेन योजनशोधनेनारंभाद्दशा
धिके रवि १२ तष्टं कृत्वा यत्स्थितं तन्मेषमीनादिक्रमव्युत्क्रमगणनया यो राशिर्लभ्यते स वर्णदराशिरिति बोध्यं होरालग्नभयोर्नेयादुर्वेलाद्व
र्णदाद्दशां यत्संख्यो वर्णदो लग्नात्तत्संख्याक्रमेण तुं क्रमव्युत्क्रमभेदेन दशास्यात्पुरुषस्त्रियोः लग्नाद्यत्संख्याको वर्णदराशिस्तत्संख्या
क्रमतः ओजयुग्मलग्नानुरोधेन प्रथमप्रवृत्तक्रमव्युत्क्रममर्यादया तत्तद्राशीनां दशास्यादिति यथानायांतादृतिसूत्रे स्वस्वराशेर्नाथांतं
वर्षाण्यानीतानि तथात्र लग्नादेव स्ववर्णदपर्यंतं वर्षाण्यानेयानीति मेषमीनादितः पूर्वोक्तरीत्याथ नभावादि तत्तद्भावात गणनां विधाय पू
र्ववत करणे तत्तद्भाववर्णदराशयो भवंतीति सर्वत्रेति पदेन सूचितं नच वर्णदानयनं वर्णददशानयनं च सूत्रार्थान्नायातीति वाच्यं सिद्ध
मन्यदिति सूत्रादन्यर्षिशास्त्रप्रसिद्धत्वादत्र नोक्तं प्राचीनैः संगृहीतमिति गुलिकोपि तथैव यथा वर्णदो राशिर्लग्नौजत्वयुग्मत्वभेदेन
मेषमीनादिगणनया जन्मलग्नहोरालग्नपर्यंतसंख्यावशात् समानीतस्तथैव भावलग्नमेवं जन्मलग्नं विभाव्य भाववर्णदराशिराने
यदूति भावलग्नानयनं वृद्धैरुक्तं सूर्योदयं समारभ्य घटिकानां तु पंचकं प्रयाति जन्मपर्यंतं भावलग्नं तथैव च तथा सार्द्धद्विघटिका॥
मितात्कालाद्धि लग्नभात् प्रयाति लग्नं तत्कालान्नाम होरालग्नं प्रचक्षते इति स्पष्टार्थौ श्लोकौ होरालग्नस्पष्टीकरणं तु सार्द्धद्वयघट्याचे
त्रिंशदंशा लभ्यंते तर्हि इष्टघट्याः किमिति त्रैराशिकेन लब्धं यं भावलग्नं होरालग्नं च जन्मलग्नाद्गणनीयमिति होरालग्नानयने जन्म

जन्मलग्नेसमेसतितुजन्मलग्नाद्गणयेत् सूर्योदयमारभ्य यावंत्योहोरादृष्टकालपर्यंतंजातास्ताः सूर्याल्लग्नाद्वापरिगणनेयांतिमंहो
रालग्नंज्ञेयमितिप्राचीनाः कारिकातोयमर्थोनायातीतिवर्णदराशितः फलमुक्तं दृष्टैः पापदृष्टिः पापयोगोवर्णदस्यत्रिकोणकेयदिस्या
त्तर्हितद्राशिपर्यंतंतस्यजीवनंरुद्रशूलेतथैवायुर्मरणादिनिरूप्यते तथैववर्णदस्यापित्रिकोणेपापसंगमेवर्णदात्सप्तमाद्राशेः कलत्रा
दिविचिंतयेत् एकादशादग्रजं तृतीयात्तुयवीयसं पंचमेतनुजं विद्यान्मातरं तुर्यपंचमे पितुस्तुनवमान्मातुः पंचमाद्वर्णदस्यतुं शूलराशि
दशायांवैप्रवलायामरिष्टकं वर्णदराशेः पंचमात्प्रवलशूलदशायांमातुररिष्टं वर्णदराशिनवमात्प्रवलशूलदशायांपितुररिष्टंजानीया
दित्यर्थः ३२ अत्रापवादमाह ग्रथ॥ नग्रहाः ३३ यावद्विवेकमावृत्तिर्भानां ३४ ॥ मपक्षेभावाराशयश्चसवर्णाः संख्याबोधकाश्च
रगम्याइत्युक्तं ग्रहास्तु नप्रसिद्धपदगम्याएवेत्यर्थः द्वितीयपक्षेभावाराशयश्चसवर्णाः वर्णदराशिसहिताइत्युक्तंग्रहास्तुवर्णदसहितान
तथाचभावराशिवर्णदाभवंतिनग्रहाणामित्यर्थः ३३ अथांतर्दशाविभागंदर्शयति भानांराशीनांप्रतिराशियेदशाव्दाश्चरस्थिरादिदशा
सुसिद्धास्तेषांद्वादशविभागेन द्वादशराशीनामावृत्तिर्भवति एवंचद्वादशराशीनां विवेकपदबोध्यचतुश्चत्वारिंशदधिकशततसंख्याभ
वतीति तदुक्तंप्राच्यैः कृत्वार्कधाराशिदशांराशेर्भुक्तिंक्रमाद्वदेत् एवंदशांतर्दशादिकृत्वातेनफलंवदेदिति यत्तु॥ उपस्थिततत्तयादशारं
भावधिः स्वस्वलग्नमेवेति पंथैरुक्तं तन्नहोरालग्नभयोर्नैयादुर्वलाद्वर्णदादशेति कारिकोक्तत्वात् ॥ ६ ॥ ॥

एवं प्रतिराशि द्वादश द्वादशाब्दा इति विवेकसंख्या महादशाभिप्रायेणापि सिद्ध्यतीति अयमर्थोपि सूत्रसंमत एव एतदभिप्रायेणांतर्दशा विभागो वृद्धैरुक्तः एकैकभावस्थैकैकवर्षे लग्नादि कल्पयेत् सापर्यायदशा लग्ने युग्मे तु व्युत्क्रमादिदं तत् लग्नं युग्मं यदा तर्हि सम्मुखं तस्य चादिभमिति पर्यायदशा अंतर्दशेति यदा लग्नं युग्मराशिस्तदा तस्य संमुखं आदिराशिः यथा वृषस्य मेष इति ॥ ३४ ॥ प्रकृतशास्त्रे वक्ष्यमाणसूत्रेषु क्वचिद्धोराद्रेक्काणाद्यपेक्षास्त्वेन तदाकांक्षानिवर्तयन्नाह होराद्रेक्काणादयः सिद्धाः शास्त्रांतरप्रसिद्धमेषादिगणनया प्रसिद्धा न तु दृक्स्वर्गलादिवद्गुप्ताः तदुक्तं वृद्धैः राशेरर्द्धं भवेद्धोरा ताश्चतुर्विंशतिः स्मृताः मेषादि तासां होराणां परिवृत्तिद्वयं भवेत् राशित्रिभागा

होरादयः सिद्धाः ३५ ॥

द्रेक्काणास्ते च षट्त्रिंशदीरिताः परिवृत्तित्रयं तेषां मेषादेः क्रमशो भवेत् स्वांशपास्त्वोजगृहे गणनीयानि जेशतः युग्मराशौ तु विज्ञेयाः सप्तमर्क्षाधिनायकात् नवांशेशाश्चरं तस्मात्स्थिरे तन्नवमादितः उभये तत्पंचमादेरिति चिंत्यं विचक्षणैः द्वादशांशास्य गणनां तत्तत्क्षेत्राद्विनिर्दिशेदिति वस्तुतस्तु राशिप्राधान्याद्धि लक्षणमेवेति ध्येयम् ३५ ॥ इति श्रीनीलकंठज्योतिर्विद्विरचितायां जैमिनिसूत्रव्याख्यायां सुबोधिन्यां प्रथमाध्यायस्य प्रथमः पादः १ ॥ ॥ अथात्मकारकाश्रयनवांशमालंब्य फलानि वक्तुमुपक्रमते ॥ ॥ ॥

अत्रकारकांशमधिकरोति॥ अथानंतरंग्रहाणांरव्यादीनांमध्येस्वांशः आत्मकारकाश्रितोयोंशोनवांशस्तस्मात्फलंविचार्य्यमित्यर्थः १॥ कारकाश्रितमेषादिनवांशफलान्याह मेषःकारकांशश्चेन्मूषिकमार्जाराद्दुःखदाःभवंतीति २ वृषःकारकांशश्चेच्चतुष्पादःसुखदाभवंति मूषिकादयोदुःखदाश्चतुष्पादःसुखदाइत्यत्रैकरूपतयार्थोऽपेक्षितःकृतस्तुभिन्नरूपेणात्रबीजंकिंउच्यते वृद्धवाक्यमेवबीजं वृद्धवाक्यंतुवृषतौल्यराशिकगतेतस्मिन्वाणिज्यवान्भवेत् मेषसिंहांशकगतेत्रूयान्मूषकदंशनम् ३ कारकेकार्मुकांशस्थेवाहनात्पतनंभवेदि

अथस्वांशेग्रहाणां १ पंचमूषिकमार्जाराः २ तत्रचतुष्पादः ३ मृत्योकंडूः स्थौल्यंच· ४ दूरेजलकुष्ठादिः ५
शेषाःश्वापदानि ६ मृत्युवज्ज्ञायाग्निकणाश्च ७ लाभेवाणिज्यं ८ अत्रजलसरीसृपास्तन्यहानिश्च ९ समेवा
हनादुच्चाच्चक्रमात्पतनं १० ॥

तिमिथुनेकारकांशेकंडूः शरीरस्थौल्यंचभवति ४ कर्केस्वांशेजलभयंकुष्ठरोगोभवति ५ सिंहांशश्चेत्श्वापदानिशुनकादयोदुःखदाभवंति ६ कन्याकारकांशश्चेन्मृत्युवन्मित्रुनाशवद्भवतिअग्निकणाश्चअग्निकणेन दुःखदश्चभवति ७ तुलाकारकांशेवाणिज्यवान्स्यात् ८ अत्रवृश्चिकांशेजलसर्पादयोदुःखदाभवंति मातुस्तन्यंदुग्धंचशुष्यति ९ धनुषिकारकांशेवाहनादूर्ध्वप्रदेशाच्चक्रमात्किंचिद्वस्तुसंलग्नतयापतनंभवति नकटितीत्यर्थः १० ॥ ॥

मकरे कारकांशे जलचरा मत्स्यादयः खेचराः पक्षिणः खेटाग्रहा एतेफलदा भवंति कंडूदुष्टग्रंथिरोगाश्च भवंति दुष्टग्रंथिर्गेडादिकं
११ कुंभे कारकांशे तडागादयः तडागवापी कूपादिकर्तारो भवंति १२ मीने कारकांशे धर्मनित्यत्वं कैवल्यं मुक्तिश्च भवति कारकस्यांशादिषु
रोः फलं वृद्धैः संगृहीतं शुभराशौ शुभांशे वा कारकांशे धनवान्भवेत् तदंशात्केंद्रेषु शुभे राजा नूनं प्रजायते कारके शुभराश्यंशे लग्नांशस्थे शु
भग्रहे उच्चग्रहस्य पाश्चात्ये स्वोच्चस्वर्क्षे शुभर्क्षगे पापदृग्योगरहिते कैवल्यं तस्य निर्दिशेत् मिश्रे मिश्रं विजानीयाद्विपरीते विपर्ययः तदंशा
केंद्रेषु कारकाश्रितांशात्कुंडल्यां केंद्रेष्वित्यर्थः पाश्चात्ये अंत्यग्रहे द्वादशेत्यर्थ मिश्रे पापशुभदृग्योगे मिश्रं स्वर्गवासः विपरीते पापमात्रदृग्योगसा

जलचरखेचरखेटकंडूदुष्टग्रंथयश्च रिष्फे ११ तडागादयो धर्मे १२ उच्चे धर्मनित्यताकैवल्यं च १३ तत्र रवौ रा
जकार्यपरः १४ पूर्णेन्दुशुक्रयोर्भोगी विद्याजीवी च १५ धातुवादी कौंतो युधो वन्हिजीवी च भौमे १६ ॥

द्वित्ये विपर्ययः न मुक्तिर्न स्वर्गवास इति ॥ चंद्रभृगवार वर्गस्थे कारके पारदारकः वृषतौल्यंशाकगते तस्मिन्वा राज्यवान्भवेत् ॥ मेषसिंहां
शके तस्मिन्वृयान्मूषिकदंशनं कारके कार्मुकांशस्थे वाहनात्पतनं भवेत् १३ अथ कारकांशग्रहस्थित्यादिना फलान्युपदिशति ॥ कार
कांशे सूर्ये सति राजकार्ये तत्परो भवति १४ कारकांशे पूर्णेंदुशुक्रयोः सतोर्भोगी विद्याजीवी च स्यात् १५ कारकांशे भौमे सति धातुवादी र
सायनविद्यावान् वह्नीति भाषया प्रसिद्धा युधः वन्हिकृत्तजीवनवांश्च स्यात् १६ ॥

कारकांशेबुधेसतिवणिक्प्रभृतयोभवंति १७ कारकांशेगुरौसतिकर्मनिष्ठाद्दयोभवंति १८ कारकांशेशुक्रेसतिराजाधिकारवंतः बहुस्त्री।
स्त्रहालवःशतवर्षजीविनश्चभवंति शतंशतवर्षदूंद्रियाणियेषामितिस्वामिनः पंचाशत्तुशतानिइंद्रियाणियेषामितिवदंतितन्नइन्द्रिया
णांशतत्वादर्शनात् १९ कारकांशेशनौसतिलोकप्रसिद्धकर्मणाजीवेदित्यर्थः २० कारकांशेराहौसतिधानुष्काश्चौराश्चस्युः किंवाजांग
लिकालोहयंत्रिणश्चस्युः वैकल्पिकमिदंफलद्वयंकथमवगतमितिचेत्मध्येचकारोपादानादेवअन्यसूत्रेषुत्वएवचकारउपा।

वणिजस्तंतुवायाःशिल्पिनोव्यवहारविदश्चसौम्ये १७ कर्मज्ञाननिष्ठावेदविदश्चजीवे १८ राजकीयाःकामिनःश
तेंद्रियाश्चशुक्रे १९ प्रसिद्धकर्माजीवःशनौ २० धानुष्काश्चौराश्चजांगलिकालोहयन्त्रिणश्चराहौ २१ राजव्यवहा
रिणश्चौराश्चकेतौ २२ रविराहुभ्यांसर्पनिधनं २३ शुभदृष्टेतन्निवृत्तिः २४ शुभमात्रसंबंधाज्जांगलिकः २५
कुजमात्रदृष्टेगृहदाहकःअग्निदोवा २६ शुक्रदृष्टेर्नदाहः २७ गुरुदृष्टेस्त्वासमीपगृहात् २८ ॥ ॥

नःअत्रमध्येकिमर्थमिति २१ कारकांशेकेतौफलमिदं २२ कारकांशेरविराहुस्थित्यासर्पान्मृतिर्भवति २३ शुभग्रहावलोकितेरविरा
हुयोगेसर्पान्मृतिर्नस्यात् २४ कारकांशगयोरविराह्वोःशुभमात्रयोगेसतिजांगलिकोविषवैद्योभवेत् मात्रशब्देनपापनिवृत्तिः २५
कारकांशगयोरविराह्वोःशुक्रदृष्टौसत्यांस्वगृहदाहकोऽग्निदोवाभवति २६ ॥

कारकांशगतरविराह्वोः शुक्रदृष्टौ सत्यां गृहदाहको न स्यात् किन्तु अग्निदानमात्रं करोतीत्यर्थः कारकांशयो रविराह्वोः गुरुदृष्टौ सत्यां सु
क्रदृष्टावसत्यामासमीपगृहात्समीपगृहपर्यन्तं दाहः स्यात् न स्वगृहमात्रस्य २८ ॥ कारकांशे गुलिकसहिते सति परस्मै विषदाता वा स्वयं
विषेण हतो वा स्यात् ॥ गुलिकानयनप्रकारस्तु वृद्धैरुक्तः ॥ रविवारादिशन्यन्तं गुलिकादि निरूप्यते ॥ दिवसानष्टधा कृत्वा वारेशाद्गण
येत्क्रमात् अष्टमांशो निरीशः स्याच्छन्यंशो गुलिकः स्मृतः रात्रिरप्यष्टधा भक्त्वा वारेशात्पंचमादितः । गणयेदष्टमः खण्डो निष्पतिः परि
कीर्तितः शन्यंशे गुलिकः प्रोक्तो गुर्वंशे यमघंटकः भौमांशे मृत्युरादिष्टो रव्यंशे कालसंज्ञकः । सौम्यांशेऽर्द्धप्रहरकः स्पष्टकर्मप्रदेशकः र.

॥ सगुलिके विषदो विषहतो वा २९ ॥

व्यादिसप्तवारेषु दिनमानमष्टधा विभज्य तत्तद्वारेशं प्रथमखंडाधिपं कृत्वाऽग्निमखण्डेषु तत्तद्वारेशादग्रिमग्रहा क्रमेणेशाश्चिन्त्या ॥
नीयादष्टमः खण्डस्तु निरीशः एवं च सप्तसु वारेषु शन्यंशो गुलिकनामा तथा च रविवारे सप्तमः सोमे षष्ठः भौमे पंचमः बुधे चतुर्थः गुरौ
तृतीयः शुक्रे द्वितीयः शनौ प्रथमः खण्डो गुलिका भवति सप्तस्वपि वारेषु रात्रिमानमष्टधा विभज्य तद्वारेशात्पंचमाद्याः खण्डाधि
पाः ज्ञेयाः रात्रावप्यष्टमः खण्डो निरीशः एवं च रविरात्रौ तृतीयः खण्डः सोमे द्वितीयः भौमे प्रथमः बुधे सप्तमः गुरौ षष्ठः शुक्रे पंचमः
शनौ चतुर्थः खण्डो गुलिको भवति एवं सर्वेषु दिने रात्रौ च गुरुखण्डो यमघंटनामा बुधखण्डोऽर्द्धप्रहरकाख्यः रव्यंशः कालसंज्ञः भौ

गुलिकादीनांस्पष्टीकरणंतु स्वस्वदेशलग्नप्रमाणानुसारेणतत्तत्खण्डकालान्तलग्नानिस्पष्टानिकृत्वागुलिकादिस्पष्टलग्नेकस्यांशो
त्तिसएवकारकांशश्चेत्सगुलिकोजात इतिविवेचनीयम् तथाचसंग्रहः तथाचरविवारादौदिनेगुलिकसंस्थितिः सप्तर्तुशरवेदत्रिद्वि
कुखण्डेषुह्निक्रमात् रात्रौत्रिद्विकुसप्तर्तुपंचतुर्थ्येषुतत्स्थितिरिति २९ सगुलिकेकारकांशेचंद्रदृष्टौसत्यांचौरैर्नीतधनः स्वयमेववा।
चौरःस्यात् ३० सगुलिकेकारकांशेऽन्यग्रहादृष्टत्वेसति वुधदृष्टेस्थूलवृषणोभवति ३१ सगुलिकेइतिपदंनिवृत्तंतत्रकारकांशेन

चंन्द्रदृष्टौचोराऽपहृतधनश्चौरोवा ३० वुधमात्रदृष्टेवृहद्वीजः ३१ तत्रकेतौपापदृष्टेकर्णच्छेदः
कर्णरोगोवा ३२ शुक्रदृष्टेदीक्षितः ३३ वुधशनिदृष्टेनिर्वीर्य्यः ३४ वुधशुक्रदृष्टेपौनःपुनिकोदा
सीपुत्रोवा ३५ शनिदृष्टेतपस्वीप्रेष्योवा ३६ शनिमात्रदृष्टेसंन्यासाभासः ३७ ॥

वांशकुण्डल्यांकेतौसतिपापदृष्टेकर्णच्छेदः कर्णरोगोवाभवति ३२ सकेतौकारकांशेशुक्रदृष्टेसतिकयाचिद्यज्ञक्रिययादीक्षितःस्या
त् ३३ सकेतौकारकांशेवुधशनिदृष्टेनपुंसकःस्यात् ३४ सकेतौकारकांशेवुधशुक्रदृष्टेपुनःपुनरुक्तवचनवक्ता दासीपुत्रोवास्यात्
३५ सकेतौकारकांशेरवियंतरेणादृष्टेपिशनिदृष्टेतपस्वीप्रेष्योवास्यात् ३६ सकेतौकारकांशेवियंतरेणादृष्टेशनिनैवदृष्टेसंन्यासाभा
सः नपूर्णसंन्यासइत्यर्थः केनापितिनिवृत्तम् ३७ ॥

कारकांशे रविशुक्राभ्यां दृष्टे राजभृत्यो भवति ३८ अथ कारकांशाद्दशमांशमवलंब्य विचारयति कारकांशाद्दशमे बुधे सति बुधदृष्टे
वा सति मंदवत् शनिवत् प्रसिद्धकर्माजीवः शनाविति सूत्रोपात्तं फलं भवति ३९ कारकांशाद्दशमे बुधेतरशुभग्रहदृष्टे स्थिरो भवति
न च चलः बुधेतरशुभदृष्टत्वं कथं ज्ञातमिति चेत् बुधदृष्टिफलस्योक्तत्वादेव ४० कारकांशाद्दशमे रवौ सति खिरांततरादृष्टे गुरु
मात्रदृष्टे गोरक्षको भवति कारकांशाच्चतुर्थफलमाह ४१ कारकांशाच्चतुर्थे चन्द्रशुक्रदृष्टियोगाभ्यां प्रासादवान्भवति ४२

तत्र रविशुक्रदृष्टे राजप्रेष्यः ३८ रिःफे बुधदृष्टे वा मन्दवत् ३९ शुभदृष्टे स्थैर्यः ४० रवौ गुरुमात्रदृष्टे गोपालः
४१ दारे चन्द्रशुक्रदृग्योगात्प्रासादः ४२ उच्चग्रहेऽपि ४३ राहुशनिभ्यां शिलागृहं ४४ कुजकेतुभ्यामैष्टकम् ४५
गुरुणा दारवं ४६ तार्णं रविणा ४७ समे शुभदृग्योगाद्धर्मनित्यः सत्यवादी गुरुभक्तश्च ४८ अन्यथा पापैः ४९ श

कारकांशाच्चतुर्थस्थिते उच्चराशिगतग्रहेऽपि प्रासादवान्भवति ४३ कारकांशाच्चतुर्थस्थितराहुशनिभ्यां शि निराहुभ्यां गुरुद्रोहः ५० ॥
लानिर्मितं गृहं भवति ४४ इदं सूत्रत्रयं राहुशनिभ्यामिति सूत्रे शेषं वक्तव्याख्यानम् अथ कारकांशान्नवमांशफलमाह ४५ ॥ ४६ ॥ ४७ ॥ का
रकांशान्नवमे शुभदृष्टियोगाभ्यां धर्मनिरतत्वादिवान्भवति ४८ नवमे पापदृष्टियोगाभ्यां धर्मनित्यत्वादिरहितो भवति ४९ नवमस्थाभ्यां
शनिराहुभ्यां तद्दृष्टाभ्यां वा गुरुद्रोहः ५० ॥

नवमेगुरुरविदृग्योगाभ्यांगुरावविश्वासोभवति ५१ कारकांशान्नवमेशुक्रभौमान्यतरषड्वर्गेसतिपरस्त्रीसक्तः स्यात् ५२ नवमेशुक्र
भौमान्यतरषड्वर्गेसतिषड्वर्गापेक्षयाऽधिकाभ्यांशुक्रभौमदृष्टियोगाभ्यामरणपर्यंतंपारदारिकोभवति ५३ कारकांशान्नवमेकेतौ
दृष्टियोगाभ्यांप्रतिबन्धः आमरणपारदारिकत्वस्यनिवृत्तिर्भवति ५४ नवमस्थितेननवमद्रष्टा वागुरुणास्त्रीलोलः ५५ नवमस्थेन
नवमद्रष्ट्रावाराहुणापरस्त्रीसंगनिमित्तंद्रव्यनाशः स्यात् ५६ अथकारकांशात्सप्तमफलमाह ॥ अत्ररदकयदं निवृत्तंनवमप्र

गुरुरविभ्यांगुरावविश्वासः ५१ तत्रभृग्वंगारकवर्गेपारदारिकः ५२ दृग्योगाभ्यामधिकाभ्यामामरणं ५३ के
तुनाप्रतिबन्धः ५४ गुरुणास्त्रैणः ५५ राहुणार्थनिवृत्तिः ५६ लाभेचन्द्रगुरुभ्यांसुंदरी ५७ राहुणाविधवा ५८
शनिनावयोधिकारोगिणीतपस्विनीवा ५९ कुजेनविकलांगी ६० रविणास्वकुलेगुप्ताच ६१ बुधेनकलावती ६२
चापेचंद्रेणनावृत्तेदेशे ६३ कर्मणिपापेशूरः ६४ ॥ करणस्यसमासत्वात् कारकांशात्सप्तमेचन्द्रगुर्वोर्योगेसतिस्त्रीसुंदरी

भवति ५७ सप्तमेराहुयोगेविधवास्त्रीगृहेभवति ५८ स्पष्टं ५९ अलक्षणांगीत्यर्थः ६० सप्तमेरवियोगेस्वकुलेभर्तृकुलेगुप्तारक्षितास्थिता।
स्यादामरणंनतुस्वातंत्र्येणयतस्ततोऽटनशीलाचकाराद्विकलांगीच ६१ गीतवाद्यादिषुकुशला ६२ कारकांशाच्चतुर्थेचंद्रेसतिपूर्वोक्त
योगेषुसत्सुअनाच्छादितेदेशेप्रोक्तस्त्रीप्रथमसंगइत्यर्थः कारकांशात्सप्तमेधनुषिचंद्रेइतिवार्थः ६३ कारकांशात्तृतीयफलमाह। कारकांश

तृतीयेशुभेकातरः ६५ तृतीयषष्ठयोः फलमाहकारकांशात्तृतीयषष्ठयोर्द्वयोरपिसपापत्वेविक्रमीवलः स्यात् ६६ नवमेगुरौविशेषेणकृषीवलः ६७ अथकारकांशाद्द्वादशेफलमाह ६७ द्वादशेशुभेसतिशुभलोकप्राप्तिः ६९ कारकांशेशुभेसतिभक्तिरित्यर्थः अथवाकारकांशात् द्वादशेकेतौसतिमुक्तिरितिनिवार्थः ६९ कारकांशेमेषेधनुषिवातत्रशुभेसतिविशेषेणमुक्तिः सायुज्यमुक्तिरित्यर्थः अथवामेषेधनुषिवाद्वादशेकेतौसतिसायुज्यमुक्ति —— रिति वस्तुतस्तुशुभापेक्षयाकेतोः सायुज्यमुक्तिदातृत्वायोग्यत्वात्त्रयमव्याख्यैवसमुचितेति

शुभेकातरः ६५ मृत्युचिंतयोः पापेकर्षकः ६६ समेगुरौविशेषेण ६७ उच्चेशुभेशुभलोकः ६८ केतौकैवल्यं ६९ क्रियचापयोर्विशेषेण ७० पापैरन्यथा ७१ रविकेतुभ्यांशिवेभक्तः ७२ चंद्रेणगौर्यां ७३ शुक्रेणलक्ष्म्यां ७४ कुजेनस्कंदे ७५ बुधशनिभ्यांविष्णौ ७६ गुरुणासांवशिवे ७७ राहुणातामस्यांदुर्गायांच ७८ केतुनागणेशेस्कंदेच ॥ ७९ पापर्क्षेमंदेक्षुद्रदेवतासु ८०।

बोध्यं नचसूत्रकारेण केतोः शुभत्वमुक्तंकेतोश्चेच्छुभत्वंस्यात्तर्हिचरदशायामत्रशुभः केतु रितिवक्ष्यमाणसूत्राच्चरदशायामेवशुभः केतुरन्यत्रनेत्यर्थोवगम्यतइति ७० कारकांशाद्द्वादशेकारकांशेचपापयोगेननशुभलोकोनमुक्तिरित्यर्थः ७१ अमात्यदासेचैवमितिपर्यंतंकेतावितिपदमनुवर्ततेकारकांशेरविकेतुभ्यांमिलिताभ्यांस्थिताभ्यांशिवेभक्तिर्भवतिअग्रेप्येवमेवयोजना ७२ एवंसप्तं ७३ ७४ ७५ ७६ ७७ ७८॥ तामस्यांभूतादिदेवतायांचेति ७९ कारकांशेपापराशौशनौसतिकर्णापिशाच्या

कारकांशेपापराशौशुक्रेतथैव ८१ आत्मकारकग्रहान्न्यूनांशोग्रहः अमात्यस्तस्माद्योदासोरव्यादिगणनयाषष्ठोग्रहस्तस्मिन्पापर्क्षे
कारकांशेसतिक्षुद्रदेवताभक्तिरित्यर्थः पंथास्तुअयमर्थः सूत्रसंमतश्चेत्पापर्क्षेमंदशुक्रामात्यदासेषुक्षुद्रदेवतास्थितिरितिसूत्रप्रणीनंस्या
दितिवदंति तन्न एवंचेन्मंदशुक्रामात्यदासेषुमिलितेषु पापर्क्षेसत्सुक्षुद्रदेवताभक्तिरित्यर्थः स्यात्भवतितु एतेषामन्यतरस्यापिपापर्क्षे
स्थित्याक्षुद्रदेवताभक्तिस्तस्माद्योगविभागएवोचितइति ८२ कारकांशात्पंचमनवमयोः पापद्वयेक्रमेणस्थितेसतिमांत्रिकः मंत्रवेत्ता॥

शुक्रेच ८१ अमात्यदासेचैवं ८२ त्रिकोणेपापद्वयेमांत्रिकः ८३ पापदृष्टेनिग्राहकः ८४ शुभदृष्टेनुग्राहकः ८५
शुक्रेन्दौशुक्रदृष्टेरसवादी ८६ बुधदृष्टेभिषक् ८७ चापेचन्द्रेशुक्रदृष्टेपांडुश्वित्री ८८ कुजदृष्टेमहारोगः। ८९
॥ केतुदृष्टेनीलकुष्ठम् ९०॥

भवति ८३ त्रिकोणद्वयेसपापेपापदृष्टेभूतादीनांनिग्रहकर्तास्यात् ८४ त्रिकोणद्वयेशुभदृष्टेऽ॥
नुग्राहकः त्रिकोणेसपापेशुभदृष्टेऽनुग्राहकः लोकेषुअनुग्रहकर्तास्यात् ८५ कारकांशेचंद्रेशुक्रदृष्टेसतिरसवादीभवति ८६
शुक्रेंदौबुधदृष्टेसतिवैद्योभवति ८७ कारकांशाच्चतुर्थेचन्द्रेशुक्रदृष्टेसतिश्वेतकुष्ठीभवति ८८ चापगेचन्द्रेकुजदृष्टेमहारोगः
कुष्ठीभवति ८९ ॥ अर्थः प्राग्वत् ९० ॥

कारकांशे चतुर्थे पंचमे वा यथायोगं कुजराहू चत्तर्हि क्षयरोगो भवति ९१ उक्तस्थानगयोः कुजराह्वोश्चंद्रदृष्टौ सत्यां निश्चयेन क्ष-
यरोगः चंद्रदृष्ट्यभावे क्षयः स्वल्पः चंद्रदृष्टौ प्रबलइति भावः ९२ तत्र मतौ वा स्थितेन कुजेन पिटकादिर्भवति ९३ तत्र मतौ वा केतुश्चे-
त्संग्रहणीजलोदराद्या रोगा भवन्ति ९३ तत्र मतौ वा राहुगुलिकौ यदि तर्हि मूषिकादिविषाणि भवंति ९४ मताविति निरुक्तं कारकांशे च-
तुर्थे शनौ धनुषि निपुणः ९५ तत्र केतुश्चेत् घटिकायंत्री भवति ९६ तत्र बुधे सति परमहंसो लगुडी वा अत्र सर्वत्रापि तत्रेतिपदमन्वेति

तत्र मतौ वा कुजराहुभ्यां क्षयः ९१ चन्द्रदृष्टौ निश्चयेन ९२ कुजेन पिटकादिः ९३ केतुना ग्रहणीजलरोगो वा ९३
राहुगुलिकाभ्यां क्षुद्रविषाणि ९४ तत्र शनौ धानुष्कः ९५ केतुना घटिकायंत्री ९६ बुधेन परमहंसो लगुडी वा॥ ९७
राहुणा लोहयंत्री ९८ रविणा खड्गी ९९ कुजेन कुंती १०० मातापित्रोश्चंद्रगुरुभ्यां ग्रंथकृत् १०१ शुक्रेण किंचिदूनं १०२

९७ ९८ ९९ १०० तत्रस्थितै राह्वादिभिस्तत्तत्फलानि भवंति १०० कारकांशे तत्पंचमांशे वा यथायोगं चंद्रगुरू चेद्ग्रंथकर्ता भवति १०१ कारकां-
शे तत्पंचमे वा चंद्रशुक्राभ्यां किंचिदूनं ग्रंथकर्तृत्वं स्यात् ननु अयमर्थस्त्वया कथं लब्ध इति चेत् केवलशुक्रेणाग्रे फलस्य वक्तव्यत्वात् ॥
न च ग्रंथकर्तृत्वे किंचिदूनत्वं कव्यादित्वं च भवतीति वाच्यं एवं चेत् शुक्रेण किंचिदूनं ग्रंथकृत्कविर्वाग्मी काव्यज्ञश्चेति सूत्रं प्रणी-
तं स्यात् तस्मादयमेवार्थः सूत्रसंमतः न च समासांतःपतितपदानामेकदेशानुवृत्तेरनौचित्यमिति वाच्यं अस्मिन्ग्रंथे त्वियं रीतिरस्त्ये-

कारकांशे तत्यंच मेवा चंद्रबुधाभ्यां शुक्रयोगापेक्षयापि न्यूनग्रंथकर्तृत्वं स्यात् १०३ मातापित्रोरेकत्रानुक्तयोगे कव्यादिः स्यात् १०४। अर्थः पूर्ववत् १०५ वक्तृत्वं नेत्यर्थः पुनरपि गुरोरेव फलमाह १०६ स्पष्टं १०७ उक्तस्थानगेन मंदेन सभाजाड्यं १०८ स्पष्टं १०९ स्पष्टं ॥ ११० स्पष्टं १११ स्पष्टं ११२ पूर्वोक्तयोगे गुरुदृष्टि गुरुषड्वर्गसंबंधे सति तत्तच्छास्त्रसंप्रदायज्ञो भवति ११३ कारकांशाद्द्वितीयेपि चंद्र

बुधेन ततोपि १०३ शुक्रेणाक विर्वाग्मी काव्यज्ञश्च १०४ गुरुणा सर्वविद्ग्रंथिकश्च १०५ न वाग्मी १०६ विशिष्य वैयाकरणो वेदवेदांगविच्च १०७ सभाजडः शनिना १०८ बुधेन मीमांसकः १०९ कुजेन नैयायिकः ११० चंद्रेणासांख्ययोगज्ञः साहित्यज्ञो गायकश्च १११ रविणा वेदांतज्ञो गीतिज्ञश्च १११ केतुना गणितज्ञः ११२ गुरुसंबंधेन संप्रदायसिद्धिः ११३ भाग्ये चैवं ११४ सदा चैवमित्येके ११५ भाग्ये केतौ पापदृष्टे स्तब्धवाक् ११६ ॥

गुर्वादिपूर्वोक्तयोगेन ग्रंथकर्तृत्वादि पूर्वोक्तं फलं स्यादित्यर्थः ११४ कारकांशात्तृतीयेपि पूर्वोक्तग्रहयोगेन ग्रंथकर्तृत्वादि फलमूह्यमित्येके ११५ कारकांशाद्द्वितीयेके तौ पापदृष्टे सति स्तब्धवाक् किंचित्स्खलन्वचनः किंवा प्रत्युत्तरदाने झटित्यसमर्थो वाणीकः स्यात् ॥ ११६ स्वीयजन्मलग्नाज्जन्मलग्नारूढाद्वा द्वितीयाष्टमयो राश्योः केवलौ पापौ स्तः समग्रहत्वेपि शुभ ॥

पापान्यतरैकग्रहत्वेनद्विग्रहवत्त्वादिनासमसंख्यौ चेत्तस्तदाकेमद्रुमयोगोभवति ननुस्वशब्देन कारकांशबोधः कथंन उच्य
तेस्वशब्द कारकांशबोधकश्चेत्पितृपदादिति वाक्यादेवतल्लाभे पुनरुपादानंव्यर्थंस्यात् स्वशब्दाभावेपितृपदात्कारकांशात्का
रकांशारूढादयमर्थः स्यात्॥ अपेक्षितस्तुजन्मलग्नाल्लग्नारूढादितिस्वशब्देनतुस्वीयलग्नाल्लग्नारूढाद्वेत्यर्थोभवतीति अ
यमेवार्थः परंपराप्राप्तत्वात्प्राचीनैरुक्तः आरूढाज्जन्मलग्नाद्वापापौस्त्रीहानिगौयदि॥ केवलौसग्रहत्वेपिसमसंख्यौशुभा॥
शुभौ चंद्रदृष्टौविशेषेणयोगः केमद्रुमोमतइति यत्तुकारकलग्नारूढेभ्यइतिस्वामिभिरुक्तं तद्दृष्टसमतंनेति ११७ प्रोक्त॥
स्वपितृपदाद्भाग्यरोगयोः पापसाम्येकेमद्रुमः १७ चंद्रदृष्टौविशेषेण १८ सर्वेषांचैवपाके १९ अथपदं १ व्यये
सग्रहेग्रहेदृष्टेश्रीमंतः २ शुभैर्न्याय्योलाभः ३ पापैरमार्गेण ४ उच्चादिभिर्विशेषात् ॥ योगेसतिद्वितीयाष्टमयोश्चंद्र
दृष्टौसत्यांविशेषेणकेमद्रुमोदरिद्रयोगोभवति ११८ ननुपूर्वोक्तफलानिकिंसर्वदाभवंति आहोस्वित्कालविशेषइत्याह ११८ सर्वेषांरा॥
शीनांपाकेदशायांएवंपूर्वोक्तानिफलानिभवंति अथवासर्वेषांराशीनांपाकेचदशारंभकालेपिएवंपूर्वोक्तकेमद्रुमयोगविचारः कार्यः के
मद्रुमेसतिदशायांदारिद्र्यंस्यादिति ११९॥ इतिजैमिनिसूत्रप्रथमाध्यायस्यद्वितीयपादव्याख्यानं २ अथारूढकुंडलीग्रहानवलंब्य॥
फलानिवक्तुंपदमधिकरोतिअथैतदनंतरंयावदीशाश्रयंपदमृक्षाणामिति सूत्रलक्षितमारूढापरपर्यायंपदमधिक्रियते अथै
कादशस्थानफलमाह १ लग्नपदादेकादशेसग्रहेग्रहांतरदृष्टेसतिलक्ष्मीवंतोभवंति २ ॥ ३॥ ६ ॥

एकादशस्थाग्रहा एकादशद्रष्टारश्च ग्रहा यदि शुभास्तर्हि न्यायमार्गाल्लाभः स्यात् ३ पापग्रहाश्चेदेकादशस्था द्रष्टारश्च तत्
र्ह्यमार्गेण शास्त्रविरुद्धमार्गेण लाभो मिश्रैर्मिश्रो लाभ इति द्वैयं ४ उच्चस्वगृहादिस्थग्रहयोगाद्विना विशेषप्राप्तिः उच्चादिगु
णावंशाभ्यां शुभपापाभ्यां न्यायादन्यायाच्च विशेषेण लाभ इत्यर्थः वृद्धैरप्युक्तं आरूढाल्लाभभवनं ग्रहः पश्येत न व्ययं यस्य जन्मनि सोपि
स्यात्प्रबलो धनवानपि द्रष्टृग्रहाणां बाहुल्ये तदा द्रष्टरि तुंगगे सार्गले चापि तत्रापि बहुर्गलसमागमे शुभग्रहार्गले तत्र तत्राप्युच्चग्र
हार्गले सुखानि स्वामिना दृष्टे लग्नभाग्याधिपो न वा जातस्य पुंसः प्राबल्यं निर्दिशेदुत्तरोत्तरमिति कोपि ग्रहो यदि द्वादशं न पश्यतीति ५

नीचग्रहदृग्योगाद्व्ययाधिक्यं ६ रविराहुशुक्रैर्नृपात् ७ चंद्रदृष्टो निश्चयेन ८ बुधेन ज्ञातिभ्यो विवादाद्वा ९ गु
रुणा करमूलात् १० कुजशनिभ्यां भ्रातृमुखात् ११ एतैर्व्यय एवं लाभः १२ ॥ अथ पदाद्द्वादशफलमाह द्वादशेग्र
हस्त्वे ग्रहांतरदृष्टो भूपान्व्यय इत्यर्थः शुभग्रहे सद्व्ययः पापेऽसद्व्यय इति ६ यदा द्वादशे रविराहुशुक्रैर्व्यस्तैः समस्तैर्वा राजमूलो व्ययः
स्यात् ७ द्वादशगे रव्यादौ चंद्रदृष्टिश्चेन्निश्चयाद्राजमूलो व्ययः चंद्रदृष्ट्यभावे तु संदिग्ध इति ८ बुधे द्वादशगे ज्ञातिनिमित्तात् कटकाद्वा
द्व्यव्ययः ९ गुरुर्द्वादशे चेत्करव्याजेन व्ययः १० द्वादशे कुजशनी चेद्भ्रात्रादिद्वारा व्ययः" अथैकादशे लाभं व्ययवदतिदिशति ११ एतैर्द्वाद
शस्थानपतितैर्ग्रहैर्यथा व्ययः उक्तस्तथा तैरेवैकादशगैस्तेनैव प्रकारेण लाभोपि भवतीत्यर्थः" अथ पदात्सप्तमे फलमाह १२ ॥

पदात्सप्तमे राहुकेत्वोरन्यतरेणोदररोगः स्यात्" अथ पदाद्द्वितीयस्य केतोः फलमाह १३ तत्र पदाद्द्वितीये केतुयोगेन शीघ्रमेव वाईक्य
चिन्हानि भवंति सतु स्वाम्यादिभिर्लाभपदानुवृत्त्या तत्र सप्तमे इत्युक्तं तन्न एवं चेत्तर्हि केतुनाऽकटितिज्ञानिलिंगानीति सूत्रं प्रणीतं
स्यात्तत्रेति किमर्थमिति अन्यच्च चंद्रगुरुशुक्रेषु श्रीमंत इति वक्तव्यत्वात्सप्तमस्य धन विचाराप्रयत्वाभावादिति॥ तदुक्तं वृद्धैः। आरू
ढात्षष्ठमे पापे चौरः स्याच्छुभवर्जिते षष्ठमे द्वितीये आरूढा द्वापि सौम्येतु सर्वदिश्यधिपो भवेत् सर्वज्ञस्तत्र जीवे स्यात्कविर्वादी च भार्ग
वे वापि द्वितीये इत्यर्थः॥१४॥ पदाद्द्वितीये व्यस्ततया समस्ततया वा चंद्रादिषु सत्सु श्रीमंतो भवंति १५ द्वितीयस्थितेन शुभपापान्यतरग्र

लानेराहुकेतुभ्यामुदररोगः १३ तत्र केतुनाऽकटितिज्ञानिलिंगानि १४ चंद्रगुरुशुक्रेषु श्रीमंतः १५ उच्चेन वा १६
स्वांशवदन्यत्प्रायेण १७ लाभपदे केंद्रेत्रिकोणे वा श्रीमंतः १८ अन्यथा दुःस्थे १९ केन्द्रेत्रिकोणोपचयेपु द्वयोर्मै

हेणोच्चस्थितेन वा श्रीमंत इत्यर्थः १६ अन्यदत्रानुक्तं फलं कारकांशवद्बोध्यं प्रायेणेत्युक्त्या न सर्वत्र कारकांशवत्फलं ।। त्री २०
औपदेशिक शास्त्रविरुद्धस्यातिदेशिकशास्त्रस्याप्रवृत्तेरिति १७ लग्नारूढात्केंद्रेत्रिकोणे वा लाभपदे लग्नात्सप्तमारूढे सति लक्ष्मी
वंतो भवंति १८ लग्नारूढात्सप्तमारूढे दुःस्थे षष्ठाष्टमव्ययस्थे सत्यन्यथाऽसुः श्रीमंतो नेत्यर्थः १९ लग्नपदात्सप्तमपदे केंद्रेत्रि
कोणोपचयगे सति द्वयोर्भार्याभर्त्रोर्मैत्री भवति एवं लग्नपदात्पुत्रादिभावपदे केंद्रेत्रिकोणोपचयगे सति तयोस्तयोर्मैत्री ज्ञेया अ
त्रोपचयपदं षष्ठातिरिक्तपरं रिपुरोगचिंतासु वैरमिति वक्तव्यत्वात् २० ॥

लग्नपदात्तद्भावपदे षष्ठाष्टमव्ययगे सति तयोस्तयोर्वैरं भवति लाभपदइत्यादिसूत्रचतुष्टयं वृद्धैः संगृहीतं लग्नारूढदारपदं मिथः केंद्रगतं यदि त्रिलाभे वा त्रिकोणे वा तदा राजान्यथाधमः आरूढौ पुत्रपित्रोस्तु त्रिलाभं केंद्रगौ यदि द्वयोर्मैत्री त्रिकोणे तु साम्यं द्वेषोन्यथा भवेत् एवं दारादिभावानामपि पत्न्यादिमित्रता जातकहृदयमालोक्य चिंतनीयं विचक्षणैरिति २१ पत्नीलाभयोर्लग्नपदतत्सप्तमयोर्निराभासार्गलया निष्प्रतिबंधार्गलया दिष्ट्या भाग्यं भवति दिष्टेत्याकारांतः शब्दः दिष्ट्या समुपजोषं चेत्यानंदे इत्यमरः अथवा दिष्टमेव दिष्टं भागधेयं येषां ते दिष्ट्याः भाग्यवंत इत्यर्थः अत्र प्राचीनैरुक्तं यस्य पापः शुभो वापि ग्रहस्तिष्ठेच्छुभार्गले तेन दृष्टेक्षितं लग्नं

रिपुरोगचिंतासु वैरं २१ पत्नीलाभयोर्दिष्ट्या निराभासार्गलया २२ शुभार्गले धनसमृद्धिः २३ ॥

प्राबल्यायोपकल्पते यदि पश्येद्ग्रहस्तन्न विपरीतार्गलस्थित इति पत्नीलाभयोरिति भाग्ययोगे सिद्धे पदरूपलग्नगतदृष्ट्या तस्यैव भाग्यप्राबल्यरूपो गुणोऽनेन विज्ञापित इति विशेषः २२ पदसप्तमयोः शुभैरेव यद्यर्गलं तर्हि धनं बहु वर्द्धते एतेन पापार्गलेन धनं भवति शुभग्रहार्गले ततोपि विशेष इत्यर्थः पूर्वसूत्रे शुभपापसाधारण्येन विपरीतार्गलं विनिर्मुक्तार्गलस्य धनादिसत्वलक्षणं भाग्ययोगाः फलमित्युक्तं अस्मिन्सूत्रे तु शुभमात्रघटिते धनवृद्धिः सार्वत्रिकी पापमात्रघटिते धनवत्वमात्रं पापशुभोभयघटिते कदाचिद्धनसमृद्धिः कदाचिद्धनवत्त्वमेवेति ननुभयपुण्येतिश्लोकोक्तशुभपापसाधारणविपरीतार्गलभिन्नशुभार्गलमेवात्र शुभा

रूपाचेदर्गलात्तर्हिपूर्वगेणैवसिद्धंशुभार्गलइतिसूत्रस्यवैयर्थ्यापत्तेरितिभावः नचभाग्यवत्त्वधनवत्त्वभेदादिति वाच्यं धनंवि नाभाग्यवत्त्वाऽप्रतीतेरित्यलं २३ जन्मलग्नंप्रसिद्धंकाललग्नंहोरालग्नंघटिकाघटिकालग्नंएतेषुत्रिष्वपिकेनचिदेकेनग्रहेणदृ ष्टेषुराजानोभवंति अत्रैकग्रहदृष्टिविषयत्वमपेक्षितंनत्वेकग्रहमात्रदृष्टत्वंकाललग्नानयनंप्रागुक्तं घटिकालग्नानयनंतुवृद्धैरुक्तं लग्ना देकघटीमात्रंयातिलग्नंदिनेदिनैःपरंतुघटिकालग्नंनिर्दिशेत्कालवित्तमइतिस्पष्टार्थः २४ जन्मराशिकुंडलीनवांशकुंडलीद्रेक्काणकुंड लीषुलग्नसप्तमयोर्द्वयोरपिएकग्रहदृष्टयोःसतोःराजानोभवंति द्रेक्काणानयनंराशित्रिभागाइतिपूर्वमुक्तं तथाचकुंडलीत्रयभेदे नलग्नसप्तमद्वयगणनयाषट्संपद्यंते षट्स्वपिएकग्रहदृष्टेराजयोगःपूर्णइत्यर्थः राशिर्जन्मकालेचंद्राक्रांतराशिर्नतुलग्नमि॥

**जन्मकालघटिकास्वेकदृष्टासुराजानः २४ पत्नीलाभयोश्चराश्यंशकदृक्काणैर्वा २५ तेष्वेकस्मिन्न्यूनेन्यूनं २६॥**

ति २५ राजयोगद्वयेपिकिंचिद्वैकल्यपरमिदंसूत्रं ताश्चतानिचतानितेषुराश्यंशकदृक्काणेषुजन्मकालघटिकासुचएकस्मिन्नेकग्रह दृष्ट्या न्यूनेसतिद्वयोर्लग्नयोरेकदृष्टयोःसतोः न्यूनंराजत्वमित्यर्थः एतदुक्तं वृद्धैः विलग्नघटिकालग्नहोरालग्नानिपश्यति।उ च्चगहेराजयोगोलग्नद्वयमथापिवा राशिद्रेक्काणनांशाच्चराशिरंशादथापिवा यद्वाराशिदृक्काणभ्यांलग्नदृष्टात्तुयोगदः प्रायेणायं जातकेषुप्रभूणामेवदृश्यतेवाक्यांतरंचजन्मकालघटीलग्नेष्वेकेनैवेक्षितेषुतु उच्चारूढेतुसंप्राप्तेचंद्राक्रांतेविशेषतः क्रांतेवागुरु शुक्राभ्यांकेनाप्युच्चग्रहेणवादुष्टार्गलग्रहाभावेराजयोगोनसंशयइति २६ जन्मेतिसूत्रोक्तंराजयोगमंशदृक्काणयोरतिदिशति ॥

यथाजन्मेतिसूत्रे जन्मलग्नकुंडल्याः सह होराघटिकाकुंडल्योः समुच्चयस्तथैवांशकुंडल्याद्रेक्काणकुंडल्याश्च पृथक्पृथक्कालघटि-
काकुंडल्योः समुच्चये तथाच लग्नकालघटिकासु अंशकालघटिकासु द्रेक्काणकालघटिकासु चैकदृष्टासु राजान इति राजयोगत्रयं सि-
द्धमिति राजयोगांतरं ग्रंथांतराद्वृद्धैः संगृहीतं निशार्द्धाच्च दिनार्द्धाच्च परं सार्द्धद्विनाडिकाः शुभा तद्भवो राजाथ नीवा तत्समोपि वेति २७ अथ या-
नयोगमाह शुक्रचंद्रौ यत्र क्वचिद्विद्यमानौ यदि परस्परं दृष्टिभाजौ तर्हि यानवंतो भवंति एवं शुक्रचंद्रावेव यदि सिंहस्थौ तृतीयगौ शुक्रा-
च्चंद्रे तृतीयगे चंद्राच्छुक्रे वा तृतीयगे सत्यपि यानवंत इति गोलार्थः तदुक्तं वृद्धैः चंद्रः कविं कविश्चंद्रं पश्यत्यपि तृतीयगे शुक्राच्चंद्रे तृ-

एवमंशतो दृक्काणतश्च २७ शुक्रचंद्रयोर्मिथो दृष्टयोः सिंहस्थयोर्वा यानवंतः २८ शुक्रकुजकेतुषु वैतानिकाः
२९ स्वभाग्यदारमातृभावसमेषु शुभेषु राजानः ३० कर्मदासयोः पापयोश्च ३१ पितृलाभाधिपाच्चैवं ३२ ॥

तः शुक्रे तृतीये वाहनार्थवान् २८ शुक्रादिषु मिथो दृष्टिमत्सु परस्परं तृतीयस्थेषु वा वितानादिराजचिन्हवंतो भवंति २९ आत्मकारकाद्रा-
श्यादिना द्वितीयचतुर्थपंचमभावतुल्येषु शुभग्रहेषु राजानो भवंति॰ एवं च तत्तत्कारकवशात्तेषां तेषामपि फलमूह्यं तस्मात्पुत्रादिकार-
केष्वपि राजयोगवत्वे पुत्रादीनामपि राजत्वं वाच्यम् ३० आत्मकारकात् तृतीयषष्ठभावसमयोः पापयोश्च राजानो भवंति कारके निरु- राम॰
क्तं योगद्वयं लग्नसप्तमाधिपयोरपि दिशति ३१ लग्नाधिपात्सप्तमाधिपाच्चैवं द्वितीयचतुर्थपंचमभावसमेषु शुभेषु तृतीयषष्ठभावसम- २६
योः पापयोश्च राजान इत्यर्थः नचारूढाधिकारात्पितृपदेनारूढो ग्राह्य इति वाच्यं ॥

जन्मेतिसूत्रात्सूत्रकारेणक्वचित्कारकात्क्वचिज्जन्मलग्नादुक्तत्वात् पितृशब्देनास्मिन्ग्रंथे प्रायोलग्नस्यैवग्रहणाच्चेति ३२ यदितत्रपापः
शुभस्थानेशुभःपापस्थानेतत्रफलमाह योगद्वयेशुभपापमिश्रेणोसतिसमाः राजसमाइत्यर्थः ३३ शुभस्थानेपापाएवपापस्थाने।
शुभाएवतर्हिदरिद्राभवंति ३४ लग्नाधिपात्सप्तमाधिपाच्चपंचमेगुर्वाद्यन्यतमेसतिराजकीयाराजाधिकारवंतोभवंति ३५ लग्नसप्त
माधिपाभ्यांतृतीयेषष्ठेवापापेसतिसेनाधिपतयोभवंति ३६ अथवृद्धियोगमाह॥ आत्मकारकाल्लग्नाच्चतृतीयषष्ठगतग्रहदृष्ट्या।

मिश्रेसमाः ३३ दरिद्राविपरीते ३४ मातरिगुरौशुक्रेचंद्रेवाराजकीयाः ३५ कर्मणिदासेवापापेसेनान्यः ३६ स्व
पितृभ्यांकर्मदासस्यदृष्ट्यातदीशदृष्ट्यामातृनाथदृष्ट्याचधीमंतः ३७ दारेशदृष्ट्यासुखिनः ३८ रोगेश
दृष्ट्यादरिद्राः ३९ रिपुनाथदृष्ट्याव्ययशीलाः ४० स्वामिदृष्ट्याप्रबलाः ४१ पश्चाद्रिपुभाग्ययोर्ग्रहसाम्ये
बंधः कोणयोरिपुजाययोःकीटयुग्मयोर्दाररिष्फयोश्च ४२ ॥ कारकेलग्नेचेत्यर्थः तथातृतीयषष्ठेशदृष्ट्यातथापं
चमेशदृष्ट्यालग्नकारकयोर्धीमंतोभवंति ३७ कारकाल्लग्नाद्वाचतुर्थेशदृष्ट्यालग्नकारकयोः सुखिनोभवंति ३८ कारकलग्नाभ्याम
ष्टमेशस्यकारकलग्नयोर्दृष्ट्यादरिद्राभवंति ३९ कारकलग्नाभ्यांद्वादशेशस्यलग्नकारकयोर्दृष्ट्याव्ययस्वभावाभवंति ४० लग्नेल
ग्नेशदृष्ट्याकारकेकारकाश्रयराशीशदृष्ट्याबलवंतोभवंति ४१ अथापद्योगानाह पश्चाल्लग्नात्द्विद्वादशयोः पंचमनवमयोः द्वादश

षष्ठयोरेकादशात्तृतीयषोश्चतुर्यदशमयो
र्वाग्रहसाम्येएकश्चेदेकःद्वौचेद्द्वौत्रयश्चे
त्त्रय॥

इतिरीत्याखेटसाम्येसतिबंधः कारापतनंभवति· अत्रपठितेषुवुद्धिकेषुनसमुच्चयनियमइतिवाच्यं एवमृक्षाणांतदीशानांचशु
भसंबंधेनिरोधमात्रंपापसंबंधाच्छृंखलाप्रहारादयः ऋक्षाणांद्विद्वादशादिद्विशयोरित्यादिद्विकयोरन्यतरत्रयोगघटकतया
शुभसंबंधश्चेन्निरोधमात्रंनतुपीडापापसंबंधात्केवलपापसंबंधाच्छृंखलादयोभवंति॥ द्विद्वादशादिषुशुभसंबंधाभावेपिद्वाद
शेशादिषुशुभसंबंधेसतिनिरोधमात्रंपापसंबंधेतुशृंखलादयोभवंतीत्यर्थः ५२ अथनेत्रभंगयोगमाह॥ शुक्राल्लग्नाद्गौणपदस्थः
पंचमराश्यारूढस्थोराहुः सूर्यदृष्टश्चेन्नेत्रनाशकरःस्यात् ५३ स्वादात्मकारकाच्चतुर्थगयोः शुक्रचंद्रयोःसतोः आंदोल्यंवाव्यविशे

**शुक्राद्गौणपदस्थोराहुः सूर्यदृष्टोनेत्रहा ५३ स्वदारगयोः शुक्रचंद्रयोरांदोल्यंराजचिन्हानिच ५५ उपपदं**
**पदंपित्रनुचरात् १ तत्रपापस्यपापयोगेप्रव्रज्यादारनाशोवा २॥** षोराजचिन्हानिपताकादीनिचस्युः ५५॥ इतिजैमि
निसूत्रव्याख्यायांसुबोधिन्यांप्रथमाध्यायस्यतृतीयःपादः ३ अथोपपदादिकमवलंब्यफलमादिशतितत्रादावुपपदंलक्षयति
लग्नानुचरात्पदंलग्नाद्द्वादशस्यराशेर्यत्पदंतदुपपदमित्यर्थः ननुपित्रनुचरपदेनद्वादशस्यबोधः कथमितिचेत् उच्यते· पितृ
लग्नमनुचरंद्वितीयंयस्येतिव्युत्पत्त्यागृहाणां यत्तुपित्रनुचरादितिपाठंस्वीकृत्याखंडात्ससंख्यालाभात्सप्तमात्पदमुपपदमिति
पंथैरुक्तंतदयुक्तं एवंचेल्लाघवात् उपपदंलाभादितिसूत्रंप्रणीतंस्यादित्यलं १ तत्रफलमाहपापस्यतत्रपापस्वामिकेतस्मिन्नुपप
दद्वितीयेपापयोगेसतिप्रव्रज्यासंन्यासः स्त्रीनाशोवास्यात् यथाकारकाधिकारपदाधिकारयोस्तत्रेतिपदेनकारकेपदेइत्यर्थोभ

तथात्रोपपदेद्वितिकुतो नोक्तमितिचेत्सत्यं तत्रोभयत्राधिकारः स्थितः अत्र नास्तीति तत्र पदे न द्वित्वसंख्यालाभादुपपदद्वितीयेद्युक्तं अनुभवसिद्धत्वाच्चेति तदुक्तं वृद्धैः आरूढात्सप्तमे पापे चोरः स्याच्छुभवर्जिते आरूढाद्द्वापि सौम्येतु सर्वदिक्ष्वधिपो भवेत् सर्वज्ञस्तत्र जीवे स्यात्कविर्वादी च भार्गवे इति आरूढादुपपदात् आरूढपदेन चेदारूढं गृह्यते तर्हि पदाधिकार एवोक्तं स्यान्नत्वत्रेति न चोपपदादितिवक्तव्ये आरूढादिति कथमुक्तमिति वाच्यं २ अत्र विषये रविः पापत्वेन न ग्राह्यः तेन सिंहे उपपदद्वितीये मेषादिपापराशौ रवौ वा सति नेदं फलमित्यर्थः ३ उपपदद्वितीये शुभदृष्टियोगाभ्यामुक्तयोगे सत्यपि नेदं फलं भवति ४ उपपदद्वितीये नीचग्रहांशके नीचग्रहाधिष्ठिते वा

**उपपदस्याप्यारूढत्वादेवनात्र रविः पापः ३ शुभदृग्योगान्न ४ नीचे दारनाशः ५ उच्चे बहुदाराः ६ युग्मे च ७**

**तत्र स्वामियुक्ते स्वर्क्षे वा तद्धेतावुत्तरायुषि निर्दारः ८ उच्चे तस्मिन्नुत्तमकुलाद्दारलाभः ९ ॥** सति दारनाशो भवति ५ उपपदद्वितीये उच्चांशे उच्चग्रहाधिष्ठिते वा सति बहुदाराः स्यात् ६ उपपदद्वितीये मिथुने सति बहुदाराः स्यात् ७ दारनाशयोगे विलंबकरयोगमाह ॥ तत्रोपपदद्वितीये स्वामिना युक्ते उत्तरायुषि निर्दारः स्यात् तच्छब्देन पूर्वपरामर्शः तद्धेतौ तस्योपपदद्वितीयस्य हेतुः स्वामी तस्मिन्स्वर्क्षे स्वराशौ सति चोत्तरायुषि निर्दारः स्यात् राशेः कारणीभूतो ग्रह एव तस्मात्स्वामिनः स्वगृहयोगो पेक्षितः ननु स्वाम्यादिभिस्तच्छब्देन दारकारकग्रहणात्त्वयेदं कथमुक्तमिति चेच्छृणु आदौ दारकारकग्रहणाभावात्तच्छब्देन दारकारकग्रहणानौचित्यात् पूर्वं दारनाशपदेन

जै॰ सू॰
टी॰ नी॰
१८

धाभावाच्च ननु रविचंद्रयोरेकगृहत्वात्स्वर्क्षे तद्वेतावित्यंशस्यसंभवो नेति चेन्मास्त्वस्माकं काक्षतिरिति ८ तस्मिन्नुपपदद्वितीयस्वामि निउच्चराशौस्थिते सत्युत्तमकुलाद्दारलाभः स्यात् ९ तस्मिन्नुपपदद्वितीयस्वामिनिनीचराशिस्थिते सति अनुत्तमकुलाद्दारलाभः स्यात् १० उपपदद्वितीयशुभवर्गेदृष्टियोगे सतिस्त्रीसुंदरीभवति ११ उपपदद्वितीये राहुशनिभ्यां योगे सतिलोकापवादात्स्त्रियस्त्यागोना शोवास्यात् १२ उपपदद्वितीयेशुक्रकेतुयोगे सतिरक्तप्रदररोगवतीस्त्रीस्यात् १३ उपपदद्वितीयेबुधकेतुभ्यां योगे अस्थिस्रावरोग॥

नीचेविपर्ययः १० शुभसंबंधात्सुंदरी ११ राहुशनिभ्यामपवादात्त्यागोनाशोवा १२ शुक्रकेतुभ्यांरक्तप्रदरः १३ अस्थिस्रावोबुधकेतुभ्यां १४ शनिरविराहुभिरस्थिज्वरः १५ बुधकेतुभ्यांस्थौल्यं १६ बुधक्षेत्रेमंदाराभ्यांनासिकारोगः १७ कुजक्षेत्रेच १८ गुरुशनिभ्यांकर्णरोगः नरहकाच १९ गुरुराहुभ्यांदंतरोगः २० शनिराहुभ्यां कन्यातुलयोः पंगुर्वातरोगोवा २१ शुभदृग्योगान्न २२॥

वतीस्त्रीस्यात् १४ उपपदद्वितीयेशन्यादित्रिकयोगेऽस्थिज्वर वतीस्यात् १५ उपपदद्वितीयेबुधकेतुभ्यांयोगे स्थूलास्त्रीस्यात् १६॥ बुधगृहे भौमगृहेवोपपदद्वितीयगतेसति शनिभौमाभ्यांयोगेनासि कारोगवतीचस्यात् १७।१८ बुधकुजान्यतरक्षेत्रेउपपदद्वितीयगेसतितत्रगुरुशनियोगे कर्णरोगवतीनरहकानाडिकानिःसरणरोग वतीचस्यात् १९ बुधकुजान्यतरक्षेत्रगेउपपदद्वितीयेगुरुराहुभ्यांयोगेदंतरोगवतीस्यात् २० कन्यातुलान्यतरगेउपपदद्वितीयेशनि राहुभ्यांयोगेपंगुर्वावातरोगवतीवास्यात्
२१ उपपदद्वितीये॥

राम:
१८

॥ शुभयोगो ॰ दृष्टिर्वा स्यात्तर्हि निरुक्तादोषा न स्युः २२ उपपदाद्यः सप्तमो भावस्तद्भावस्य नवांशश्च ताभ्यां तयोः स्वामिनौ ग्रहौ ताभ्यां
च द्वितीये एवं पूर्वोक्तानि फलानि समुन्नेयानि तदुक्तं वृद्धैः सप्तमेशाद्द्वितीयस्थेऽप्येवं फलमुदाहृतमिति २३ उपपदात्सप्तमांशग्र
हेषु बुधशनिशुक्र योगे सत्यनपत्यहीनो भवति २४ उपपदात्सप्तमांशग्रहेभ्यः पंचमस्थानेषु रव्यादिषु सत्सु बहुपुत्रः स्यात् २५
सप्तमांशग्रहेभ्यः पंचमस्थानेषु चंद्रे सति एकपुत्रः स्यात् २६ उपपदात्सप्तमांशग्रहेभ्यः पंचमस्थानेषु अनपत्यत्व बहुपुत्र
त्वादिग्रहमिश्रणे सति विलंबात्पुत्रलाभः २७ उपपदात्सप्तमांशग्रहेभ्यः पंचमेषु कुजशनिभ्यां स्थिताभ्यां दत्तपुत्रवान्स्यात्

सप्तमांशग्रहेभ्यश्चैवं २३ बुधशनिशुक्रेष्वनपत्यः २४ पुत्रेषु रविराहुगुरुभिर्बहुपुत्रः २५ चंद्रेणैकपु
त्रः २६ मिश्रे विलंबात्पुत्रः २७ कुजशनिभ्यां दत्तपुत्रः २८ ओजे बहुपुत्रः २९ युग्मेऽल्पप्रजः ३० गृहक्रमा
त्कुक्षितदीशपंचमांशग्रहेभ्यश्चैवं ३१ भ्रातृभ्यां शनिराहुभ्यां भ्रातृनाशः ३२ ॥

२८ उपपदात्सप्तमांशग्रहेभ्यः
पंचमेषु ओजराशौ सति बहुपुत्रः स्यात् २९ उक्तस्थाने युग्मराशौ सत्यल्पापत्यो भवति ३० गृहक्रमाज्जन्मलग्नक्रमानुय
थाभावानां विचारः क्रियते तथा कुक्षितदीशादिभ्योऽपि कुर्यात् कुक्षितदीशावुपपदोपपदेशौ ताभ्यां पंचमांशग्रहाः पंचमो
भावस्तद्भावस्य नवांशश्च ताभ्यां तयोः स्वामिग्रहाभ्यां चैवं पूर्वोक्तफलविचारः कार्य इत्यर्थः तस्माद्यत्र यस्य संभवस्तथा ग्नि
मसूत्रेऽनुवृत्तिः कार्या भ्रातृस्थाभ्यामित्यादिसूत्रेषूपपदोपपदेशाभ्यां विचारः कार्य इति कुक्षिपदेन प्रकरणपठितोपपदस्य

दिभिः कुक्षितदीशाविति सिंहरवीत्युक्तं तत्सर्वसाधारण्यादनुपयुक्तं विशेषतोऽस्मिन्शास्त्रेऽक्षरगम्यांकानामेव ग्रहणादिति ३१ उपपदोपदेशाभ्यां भ्रातृस्थाभ्यामेकादशतृतीयस्थाभ्यां शनिराहुभ्यां भ्रातृनाशः एकादशे ज्येष्ठस्य तृतीये कनिष्ठस्य नाशः कर्मादिभ्रातुर्व्ययादि ज्येष्ठस्येति सूत्रदर्शनात् ननु उपपदोपपदेशाभ्यामिति कुतः समागतमिति चेच्छृणु गृहक्रमादिति सूत्रात्कुक्षितदीशपदात् न च समासपतितपदानामेकांशानुवृत्तेरसंभवादिति वाच्यं अन्यपदेभ्यो भ्रातृविचारायोग्यत्वादेकांशानुवृत्तेरिति भावः ३२ एकादशतृतीयान्यतरस्थेन शुक्रेण यथाक्रमं व्यवहितपूर्वापरमातृगर्भनाशः स्यात् ३३ लग्ने लग्नादष्टमे वा शुक्रदृष्टे सत्यपि व्यवहितगर्भनाश इत्यर्थः ३४

शुक्रेणाव्यवहितगर्भनाशः ३३ पितृभावे शुक्रदृष्टेऽपि ३४ कुजगुरुचंद्रबुधैर्बहुभ्रातरः ३५ शन्याराभ्यां दृष्टे यथास्वं भ्रातृनाशः ३६ शनिना स्वमात्रशेषश्च ३७ केतौ भगिनीबाहुल्यं ३८ लाभेशाद्राश्यभे राहौ दंष्ट्रावान् ३९ केतौ स्तब्धवाक् ४० मंदे कुरूपः ४१ स्वांशवशाद्गौरनीलपीतादिवर्णाः ४२ ॥

उपपदोपपदेशाभ्यां तृतीयैकादशस्थैः कुजादिभिर्भ्रातृबाहुल्यं स्यात् ३५ उपपदोपपदेशाभ्यां तृतीयैकादशयोः शन्यारदृष्टौ सत्यां यथास्वं भ्रातृस्थानमनतिक्रम्य तृतीये दृष्टौ कनिष्ठस्यैकादशे दृष्टौ ज्येष्ठस्योभयत्र दृष्टावुभयोश्च नाशः स्यात् ३६ उपपदोपपदेशाभ्यां तृतीयैकादशयोः शनिदृष्टौ सत्यां केवलं स्वमात्रशेषः स्यादन्ये नश्यंतीत्यर्थः ३७ उपपदोपपदेशाभ्यां तृतीयैकादशयोः केतौ सति भगिन्यो यथाभूयस्यो भवंति ३८ उपपदसप्तमेशाद्द्वितीयराशौ राहौ सति स्थूलदंष्ट्रावान्स्यात् तदुक्तं प्राच्यैः सप्तमेश ॥ ६ ॥

द्वितीयस्थे राहौ मूकः खले स्थिते अदंतोधिकदंतो वा दंष्ट्रायुक्तो यथा वा भवेत् पवनव्याधिमान् केतौ यद्वा स्यादस्फुटोक्तिमान् तत्र नानाग्रहे यो
गे मिश्रं फलमुदाहृतमिति ३९ उपपदसप्तमेशात् द्वितीये केतौ सति स्तब्धवागस्फुटोक्तिमान् स्यात् ४० उपपदसप्तमेशाद्द्वितीयेश्च नौ
सति कुरूपो भवति ४१ आत्मकारकाश्रितनवांशस्य भावाज्ज्ञानं कान्तरप्रसिद्धा जातकवर्णनो वर्णा ग्राह्याः एवं च तत्तत्कारकांशानां
तेषां तेषां वर्णा ज्ञेया इत्यपि बोध्यम् ४२॥ अमात्यग्रहान्न्यूनो यो ग्रहस्तस्माद्देवताभक्तिर्विचारणीया अमात्यानुचरो देवताकारक
स्तस्य पापत्वे क्रूरदेवतायां शुभत्वे सौम्यदेवतायां उच्चगत्वे स्वर्क्षगतत्वे च भक्तिदृढतानीचगत्वे भक्त्यस्थैर्यमित्यादिकं ज्ञेयं ४३

अमात्यानुचराद्देवताभक्तिः ४३ स्वांशे केवलपापसंबंधे परजातः ४४ नात्र पापात् ४५ शनिराहुभ्यां प्रसिद्धिः
४६ गोपनमन्येभ्यः ४७ शुभवर्गेऽपवादमात्रं ४८ द्विग्रहे कुलमुख्यः ४९॥ कारकांशे शुभग्रहरहितकेवलपापसंबं
धे जारतो भवति संबंधस्तु दृष्टियोगषड्वर्गैर्ज्ञेयः ४४ अत्र कारकस्थैव त्यापि भवति तदा त्विदं फलं न स्यात् कारकातिरिक्तादेव पापसं
बंधादि फलं वाच्यं न कारकात्पापादित्यर्थः अथवाऽत्राष्टमे पापग्रहे सति नायं योगः ४५ शनिराहू यदि योगघटकौ शनिराहुदृष्टि
योगषड्वर्गैः परजातत्वप्रसिद्धिर्भवति ४६ अन्येभ्यः पापग्रहेभ्यो योगे सति परजातत्वगोपनं भवति ४७ पापग्रहेषु योगघटकेषु सत्सु
कारकांशे शुभषड्वर्गसंबंधे सति तु परजातत्वापवाद एव भवेन्न तु परजातत्वमित्यर्थः ४८ कारकांशे द्विग्रहयोगे सति कुलमुख्यो भ
वति ४९॥ इति नीलकंठज्योतिर्विद्विरचितायां जैमिनिसूत्रव्याख्यायां सुबोधिन्यां प्रथमाध्यायस्य चतुर्थः पादः समाप्तः॥ १ ॥

अथायुर्दीयोपायंदर्शयति॥ लग्नेशाष्टमेशाभ्यामायुर्विचार्यमित्यर्थः १ लग्नेशाष्टमेशस्थितिवशतोदीर्घायुर्योगमाह प्रथमयोश्च
रयोरुत्तरयोः स्थिरद्विस्वभावयोर्वायदिलग्नेशाष्टमेशौभवतस्तर्हिदीर्घमायुर्भवतिअयमर्थः यत्रक्वापिचरराश्योर्लग्नेशाष्टमेशा॥
योः स्थित्यादीर्घायुर्योगः स्थिरद्विस्वभावयोः लग्नेशाष्टमेशयोः स्थित्यावास्थिरेलग्नेसतिद्वंद्वेऽष्टमेशः द्वंद्वेलग्नेशेसतिस्थिरेष्टमे
शइतिपर्यायेणभवतस्तदापिदीर्घायुर्योगः स्यादिति अत्रैकस्मिन्नेवचरादौतदुभयसत्वेएकस्यैवतदुभयस्वामित्वेवानयोगहानिः
२ अथमध्यायुर्योगंदर्शयति प्रथमद्वितीययोश्चरस्थिरयोश्चरेलग्नेशः स्थिरेऽष्टमेशश्चरेऽष्टमेशः स्थिरेलग्नेशइतिरीत्यायदि
भवतः यदिवाद्विस्वभावयोर्द्वावपिलग्नेशाष्टमेशौयत्रक्वापिभवतस्तर्हिमध्यायुर्भवतीत्यर्थः ३ अथाल्पायुर्योगमाह॥ यदिमध्य

आयुः पितृदिनेशाभ्यां १ प्रथमोत्तरयोर्वादीर्घं २ प्रथमद्वितीययोरंत्ययोर्वामध्यं ३ मध्ययोराद्यंतयोर्वाहीनं
४ एवंमंदचंद्राभ्यां ५ पितृकालतश्च ६॥ योः स्थिरयोर्यत्रक्वापिलग्नेशाष्टमेशौस्तः यदिवाआद्यंतयोश्चरद्विस्वभावयो॥
योर्लग्नेशाष्टमेशौस्तस्तर्हिहीनमल्पायुर्भवतीत्यर्थः ४ अथयथालग्नेशाष्टमेशयोराशिस्थितिभेदेनदीर्घमध्याल्पायूंषिप्रोक्तानि त
थैवलग्नचंद्राभ्यामप्युच्यते मंदचंद्राभ्यांलग्नेंदुभ्यामेवंपूर्वोक्तप्रकारेणदीर्घमध्याल्पायूंषिविचार्याणीत्यर्थः ५ जन्मलग्नहोराल
ग्नाभ्यांचपूर्वोक्तप्रकारेणदीर्घमध्याल्पायूंषिसमानेयानि तथाच त्रिविधद्वंद्वेनदीर्घमध्याल्पायूंषित्रेधासमानेयानीतिपर्यवसि
तोर्थः होरालग्नानयनंतुपूर्वमेवोक्तं एतदुक्तंद्वंद्वैः लग्नेशरंध्रपत्योश्चलग्नेंद्वोर्लग्नहोरयोः ॥ ६ ॥ ॥

| | | |
|---|---|---|
| १ दीर्घ<br>१ | १ मध्य<br>२ | १ अल्प<br>३ |
| २ दीर्घ<br>३ | २ मध्य<br>१ | २ अल्प<br>२ |
| ३ दीर्घ<br>२ | ३ मध्य<br>३ | ३ अल्प<br>१ |

सूत्राण्येवंप्रयुंजीयात्संवादादायुषांत्रये चरेचरस्थिरद्वंद्वाः स्थिरेद्वंद्वचरस्थिराः द्वंद्वेस्थिरोभयचरादी र्घमध्याल्पकायुषः प्रथमयोरित्यादिसूत्रत्रयसंग्राहकश्चरइति प्रस्तारश्लोकः प्रस्तारश्चक्रेद्रष्टव्यः ६ अथत्रिविधेप्यायुर्दायनिर्णयोपायेषुत्रयाणामेकाकारायुः प्रदत्वेनिर्विवादमेवद्वयोरेकाकारायुःप्रद त्वेऽपरस्यभिन्नायुःप्रदत्वेनिर्णयमाह ६ प्रकारद्वयेनयादृशमायुरायाति तदेवग्राह्यंनत्वेकेनागतमि ति ७ अथत्रयाणांपक्षाणांवैरूप्येग्राह्यपक्षमाह त्रयाणामपिपक्षाणांविसंवादेवैरूप्येसतिजन्मल ग्नहोरालग्नाभ्यामागतमायुर्ग्राह्यमित्यर्थः सर्वत्रैवविसंवादेलग्नहोराभ्यामेवायुः प्राप्तावपवादमाह

संवादात्प्रामाण्यं ७ विसंवादेपितृकालतः ८ पितृलाभगेचंद्रेचंद्रमंदाभ्यां ९ ॥

लग्नेसप्तमेवाचंद्रेस्थितेसतिचंद्रलग्नाभ्यामागतमायुर्ग्राह्यमित्यर्थः अल्पायुष्यादिकंवृद्धैरुक्तं द्वात्रिंशात्पूर्वमल्पायुर्मध्यमायु स्ततोभवेत् चतुःषष्ट्याःपुरस्तात्तुततोदीर्घमुदाहृतमिति द्वात्रिंशच्चतुष्षष्टिसमवतिरूपेप्यागतेप्यायुर्दायेषुस्पष्टीकरणंवृद्धैरुक्तं पूर्णमादौह्रानिरंतेऽनुपातोमध्यतोभवेत् राशिद्वयस्ययोगार्द्धंवर्षाणांस्पष्टमुच्यते॥ एवंद्विकानांसंचिंत्यत्रयाणांसूत्रवर्त्मनेति अ यमर्थः॥ प्रथमयोरित्यादिसूत्रजालेनायुर्यन्निर्णीतंतत्रदीर्घायुषिसमागतेमध्यमायुरवधिपर्यंतंनिर्विशंकंसिद्धमेव तदुपरितने दीर्घायुःखंडेद्वात्रिंशदब्दरूपेकियद्ग्राह्यमितिसंशयनिराकरणायायंश्लोकः पितृदिनेशोद्वाव ॥ ८ ॥ ॥ ॥

पियद्ह्रासोभवतस्तद्ह्रासारंभेतोचेत्तर्हितत्रोचितः खंडः पूर्णएवतद्ह्रासयंतेयदितौभवतस्तर्हितत्खंडस्यविनाशएवमध्येत्वनुपातेन
खंडैकदेशोग्राह्यः अनुपातस्त्वित्थंत्रिंशदंशेष्वेद्वात्रिंशद्वर्षाणितर्ह्येकेनांशेनकिमिति ३२ प्राप्तं १ तत्रलग्नेशाष्टमेशयोः पृथक्स्पष्टं।
विधायराशीन्दूरीकृत्यांशादेरेकखंडस्यत्रैराशिकेनयदापातिलग्नेशस्याष्टमेशस्य ३०० स्यच २४ तयोरागतयोर्वर्षादिपिंडयोर्योगंविधाय
तद्योगार्द्धंस्पष्टंभवति॥तच्चयदिदीर्घायुः॥संबंधितर्हिचतुःषष्ठिमध्येयोज्यं यदिमध्यायुःसंबंधितदाद्वात्रिंशन्मध्येयोज्यं यद्यल्पायुः
संबंधितदाप्रथमखंडाभावात्स्वयमेवजन्मप्रभृतिर्वर्तमानमायुर्भवति॥एवंमंदचंद्रयोःपित्तकालयोरपित्तमागतायुष्यंतिमखंडस्य

शनौयोगहेतौकक्ष्याह्रासः १० विपरीतमित्यन्ये ११ सूत्राभ्यांनस्वर्क्षेतुंगगेसौरे १२ केवलपापदृग्योगिनिच १३

ष्टीकरणंविज्ञेयम्॥अन्यत्तु॥होरालग्नादिमीशंतु पूर्णमंतेनकिंचनस्पष्टीकरणमेतस्याद्दीर्घमध्याल्पकायुषिअनुपातस्तुपूर्ववत् अ
नेनहोरालग्नस्यापिसावयवत्वंप्रदर्शितं" अथदीर्घमध्याल्पायुर्योगेषुकंचनविशेषंदर्शयति ९ यद्यत्रशनिर्योगकर्तास्यात्तदाकक्ष्या
ह्रासोभवतिदीर्घंचेन्मध्यंमध्यंचेदल्पंअल्पंचेन्नकिंचनेति १० मतांतरमाह शनौयोगकर्तरिविपरीतंह्रासोनभवति किंतुयथास्थित
तएवेत्यन्येआचार्यावदंति ११ १२ परपक्षनिर्दिश्यस्वपक्षमाह स्वराशिस्थोच्चगेशनौतथाशुभदृग्योगरहितकेवलपापदृष्टियोग
विशिष्टेशनौचनकक्ष्याह्रासःअन्यथातुह्रासोभवत्येव॥अत्रान्याचार्यमतमेवानुभवसिद्धमितिसर्वमनसिद्धांनकक्ष्याह्रद्धियोगांतरेणो

लग्नसप्तमयोर्गुरौसतितथापापदृष्टिपापयोगरहितशुभदृष्टिशुभयोगसहितेगुरौचक्रस्यात्वृद्धिरित्यर्थः तथाचानायुषोल्पायुर्वृ
द्धिः अल्पायुषोमध्यायुर्वृद्धिः मध्यायुषोदीर्घायुर्वृद्धिः दीर्घायुषःषसवत्पूर्णमायुर्भवतीत्यर्थः १४ आयुषिप्रमाणसिद्धेपूर्णेमरणंभवतं
तत्स्वदपिमरणंभवतीत्याकांक्षायामाह द्वारंवाह्यंचेतिसमाहारद्वंद्वः दशाश्रयोद्वारं ततस्तावतिथंवाह्यमित्यग्रेवक्ष्यति॰ तस्मिन्याक
श्रोभाषापरपर्यायेद्वारवाह्येमलिनेस्वयंपापेपापयुक्तेपापदृष्टेचसतिद्वारवाह्ययोर्नवांशेनवांशदशायांनिधनंभवति अत्रनवांशप
देनप्रतिराशिनवांशमितानवाब्दाग्राह्याः॥ विषमेतदादिर्नवांशइत्यादिनावक्ष्यमाणानवांशदशेति॥ जन्मकालेआद्यदशाश्रयरा

पितृलाभगेगुरौकेवलशुभदृग्योगिनिचक्रस्यात्वृद्धिः १४ मलिनेद्वारवाह्येनवांशेनिधनंद्वारद्वारेशयोश्चमालिन्ये
१५ शुभदृग्योगान्न १६ रोगेशेतुंगेनवांशवृद्धिः १७ तत्रापिपदेशदशांते पदनवांशदशायांपितृदिनेशत्रिकोणेवा १८

शेर्यावत्संख्याकोद्वारराशिस्तस्मात्तावत्संख्याकोराशिर्वाह्यमुच्यते॥ द्वारवाह्ययोर्द्वयोरपिमलिनत्वएवनिधनंनत्वन्यतरस्यएवंद्वार
राशेर्द्वारेशस्यचमालिन्येसतिद्वारतद्दशाश्रयराशिनवांशदशायांनिधनंभवतीत्यर्थः १५ निधनयोगापवादमाह द्वारवाह्यद्वारेशानांशु
भदृष्टिशुभयोगसत्वेद्वारवाह्यद्वारेशाश्रयनवांशदशायांनिधनंनेत्यर्थः॥ अथशुभदृग्योगाभावेपिनवांशकालनिधनापवादमाह १६
जन्मलग्नादष्टमेशेउच्चंगतेसत्युक्तनिधनयोगेसत्यपिदशायांमरणमुक्तं तदुत्तरंनवांशवृद्धिःनवाब्दवृद्धिरित्यर्थः १७ ननुराशिवृद्धौ
सत्यांकुत्रराशौनिधनमितिशंकायामाह न
नापिवृद्धिपक्षेपिपदस्यलग्नारूढ ॥

स्वेशः स्वामी तदाश्रयीभूतराशेर्दशायां अंते निधनं स्यात् अथवा जन्मलग्नारूढनवांशदशायां निधनं स्यात् किंवा लग्नेशाष्टमेशाभ्यां
त्रिकोणे लग्नपंचमनवमान्यतरराशिदशायामंतर्दशायां वा निधनं भवतीत्यर्थः १८ अथ प्रकारांतरेण दीर्घादि योगत्रयमाह ल
ग्नात्सप्तमाच्च यावदष्टमेशोन योर्यः प्राणी बली तस्मिन् कंटकादिस्थे लग्नादि केन्द्रपणफरापोक्लिमस्थे त्रिधा योगो भवति॰ लग्नादि
केन्द्रगे तस्मिन्दीर्घायुर्योगः पणफरस्थे मध्यायुः आपोक्लिमस्थे त्वल्पायुरित्यर्थः एवं स्वतच्च कारकादपि योगत्रयमिदं वोध्य
म्॥ तथा च कारकात्सप्तमाच्च यावदष्टमेशोन योर्यो बली तस्मिन्कारककेंद्रादिस्थे दीर्घमध्याल्पायुर्योगा भवंतीत्यर्थः १९ अथैतद्यो
गानामपवादमाह योगाज्जन्मलग्नसप्तमात्सप्तमे नवमे स्वस्मिन्कारके सति विपरीतं पितृलाभेत्यादिसूत्रोपदिष्टयोगान्स्युः किं

पितृलाभरोगेशप्राणिनि कंटकादिस्थे स्वतश्चैवं त्रिधा १९ योगात्सप्तमे स्वस्मिन्विपरीतं २० ॥

तु दीर्घं चेन्मध्यं मध्यं चेदल्पं अल्पं चेन्न किंचिदित्यर्थः वैपरीत्यं तु दीर्घं चेदल्पं अल्पं चे दीर्घं मध्यं चेन्मध्यमेवेति तु संप्रदायविदः
आयुर्दायविषये विशेषमाहुर्वृद्धाः एकोष्टमेशः स्वोच्चस्थः पर्यायाद्वं प्रयच्छति॥ नीचस्थो नाशयेत्पर्यायार्द्धमायुषि निश्चितेनीच
रंध्रेशसंयुक्ताः पर्यायार्द्धं एषक्रमेणैक ग्रहाविनाशयंत्येवं निर्णीते परमायुषि उच्चरंध्रेशसंयुक्तग्रहैः प्रत्येकमुन्नयेत् एकैकम 
र्द्धं पर्यायं परमायुषि निश्चिते अयमर्थः आयुः पितृदिनेशाभ्यामित्यनेनाष्टमेश उच्चस्थश्चेत्तत्पर्यायार्द्धं स्वदशार्द्धमधिकं ददा
ति नाप्यंतादृतिरीत्या यावद्दायुः प्राप्यंति तस्मिन्पुनरपितदर्द्धमधिकं योजनीयमिति यावत्॰ अष्टमेशो नीचस्थ ॥ ६ ॥

शिगश्चेदायुष्यर्द्धं नाशयेत् एवमेव नीचाष्टमेशयुक्ता ग्रहा अपि स्वदीयमानायुष्यर्द्धमर्द्धं नाशयेयुः॥ एवमुच्चाष्टमेशसंयुक्ता ग्रहाः स्वदीयमानायुषि स्वदशार्द्धमधिकं दद्युः एवमेव लग्नेशादयोपि ग्रहाः उच्चनीचगुणतो वृद्धिह्रासौ कुर्युरिति संप्रदायः २० अस्मिन्प्रकरणे किं बलं ग्राह्यमित्याशंकायामाह अत्र राशितो बलं ग्राह्यं कारकयोगः प्रथमो भानामित्यादिकं वक्ष्यमाणबलं ग्राह्यं अत्रांशाधिक्यबलं न ग्राह्यमित्यर्थः २१ अथ प्रकारांतरेण मध्यायुर्योगमाह लग्नात्सप्तमाच्च रोगेशयो रष्टमेशयोः स्वतः कारके सैकोपि सति योगे वा सनिपितृलाभेत्यादि सूत्रेण प्राप्तदीर्घायुषामपि मध्यायुरेव भवतीत्यर्थः॥ जातकशास्त्रांतरे लग्नस्यास्मिन्ग्रंथे कारकस्य प्राधान्यादष्टमेशयोगेना

राशितः प्राणाः २१ रोगेशयोः स्वतएके योगे वा मध्यं २२ पितृलाभयोः पापमध्यत्वे कोणपापयोगे वा कक्ष्याह्रासः
२३ स्वस्मिन्नप्येवं २४ तस्मिन्पापे नीचेऽतुंगेऽशुभसंयुक्ते च २५ ॥

युषो ह्रास एवेति विभावनीयं २२ अथ दीर्घादियोगेषु कक्ष्याह्रासमाह॥ ॥सूत्रं २३ २४ पितृलाभयोर्लग्नसप्तमयोर्द्वयोरपि पापग्रहस्य मध्यवर्तित्वे कक्ष्याह्रासो भवति लग्नकुंडल्यां द्विद्वादशयोः षष्ठाष्टमयोश्च पापयोगे सति पापमध्यवर्तित्वं भवति स्वं लग्नसप्तमयोः कोणपापयोगे वा कोणेषु त्रिकोणेषु लग्नपंचमनवमेषु सर्वत्र पापयोगे वा कक्ष्याह्रासो भवति॥ स्वस्मिन्कारकेप्येवं लग्नकुंडलीवद्भवति अयमर्थः कारकराशेस्तत्सप्तमराशेश्च पापमध्यत्वे एकयोगः॥ कारकतत्सप्तमयोस्त्रिकोणे सर्वत्र पापयोगे सति द्वितीयो योगः कक्ष्याह्रासाय तस्मिन्कारके पापे नीचे सति कक्ष्याह्रासः कारके पापेऽतुंगेऽनुच्चराशौ अशुभसंयुक्ते च सति कक्ष्याह्रासो भवतीति तृतीयो योगः २५ अथ कक्ष्याह्रासयोगेऽपवादमाह ॥ ॥

अन्यथालग्नसप्तमयोः कारकसप्तमयोर्वाशुभग्रहमध्यगतत्वेलग्नकारकाभ्यांकोणेषुशुभयोगेवाकारकेशुभेऽनीचेवाकारकेशुभे तुंगेशुभसंयुक्तेचवाअन्यत्कक्ष्यावृद्धिरित्यर्थः तथाचसर्वत्रयोगेपापात्मकेकक्ष्याह्रासः शुभात्मकेकक्ष्यावृद्धिः शुभपापरहितेनवृद्धिर्नह्रासइतिबोध्यम् २६ अथह्रासवृद्धिप्रकारान्गुरावपिदर्शयति एवमित्यर्थः गुरोर्हिद्वादशषष्ठाष्टमत्रिकोणेषुपापयोगेसतिकक्ष्याह्रासः गुरोनीचेऽतुंगेऽशुभसंयुक्तेचकक्ष्याह्रासः अन्यथाचेदन्यथेति प्राग्वद्योजनं २७ तत्रापवादंदर्शयति उक्तस्थानेषुशुभग्रहयोगप्रकरणेपूर्णेन्दुशुक्रयोर्योगेसतिनकक्ष्यावृद्धिः किंत्वेकराशिवृद्धिरेवेत्यर्थः २८ पापयोगेनयःकक्ष्याह्रासउक्तस्तत्रापवादं

अन्यदन्यथा २६ गुरौच २७ पूर्णेन्दुशुक्रयोरेकराशिवृद्धिः २८ शनौविपरीतं २९ स्थिरदशायांयथाखंडंनिधनं
॥ ३० तत्रर्क्षविशेषः ३१॥

दर्शयति शनावुक्तस्थानगेसतिनकक्ष्याह्रासः किंत्वेकराशिह्रासएवेत्यर्थः अत्रचंद्रशुक्रशनीनांप्राधान्येनयोगकर्तृत्वेनग्रहांतरेषुयोगकरेष्वपिएकराशेर्वृद्धिर्ह्रासोवास्यान्नतुकक्ष्याया इत्यर्थः २९ अथसकलायुर्योगापवादत्वेन निधनयोगंस्थिरदशामालंब्याह खंडमनतिक्रम्ययथाखंडं स्थिरदशायांशशिनंदपावकाद् इतिवक्ष्यमाणायांदीर्घमध्याल्पायुर्भेदेनपूर्णायुषस्त्रेधाखंडकरणाद्यःखंडःसमागतस्तस्मिन्नेवखंडेनिधनंभवतीत्यर्थः एवंचवक्ष्यमाणप्रकारेणनिधनाश्रयखंडात्पूर्वखंडेनिधनलक्षणाक्रांतराशेर्दशायामागतायामपिननिधनंस्यात् किंतुक्लेशःस्यात् ३० अथदीर्घमध्याल्पायुर्भेदेनमरणखंडेनिर्णीतेनविशेषतोमरणकालज्ञानमितःसंभवतीत्यत्राह तत्रनिधनेऋक्षविशेषःराशिविशेषोस्तीत्यर्थः ३१॥ ६ ॥

स्तराशिविशेषः कइत्यपेक्षायामाह॰ पापद्वयमध्यगतराशिदशायांप्रथमदशाप्रदराशेस्त्रिकोणेद्वादशाष्टमयोर्वापापयोगेस
ति तद्राशिदशायांनिधनंभवति एतदुक्तंवृद्धैः शुभमध्येमृतिर्नैवपापमध्येमृतिर्भवेदिति लग्नात्कारकाद्वापापाक्रांतत्रिको
णादशायांपापाक्रांतद्वादशाष्टमराशिदशायांवानिधनंभवतीत्यन्ये ३२ पुनरपिनिधनेराशिविशेषमाह तदीशयोर्द्वादशा
ष्टमेशयोर्ग्रहांतरदृष्टिरहितकेवलक्षीणेन्दुशुक्रयोर्दृष्टौसत्यांद्वादशाष्टमराशिदशयोर्निधनंभवतीत्यर्थः ३३ बहुवर्षव्यापि
न्यांदशायांकदामरणमित्याशंकायामाह तत्रापिनिधनस्थानत्वेनादिष्टासुपापमध्य राश्यादिदशासुआद्यर्क्षारिनाथौ प्रथम

पापमध्येपापकोणेरिपुरोगयोः पापेवा ३२ तदीशयोः केवलक्षीणेन्दुशुक्रदृष्टौवा ३३ तत्राप्याद्यर्क्षारिना
थदृश्यनवभागाद्वा ३४ पितृलाभभावेशप्राणीरुद्रः ३५ अप्राण्यपिपापदृष्टः ३६ ॥ दशाप्रदराशितत्षष्ठराशिना

थौताभ्यांदृश्योयोनवमभागोनवांशकुंडल्याः राशिस्तस्यातद्दशायांवानिधनंभवतीत्यर्थः ॥ ननुआद्यशब्देनदशमराशिः अरिशब्दे
नषष्ठराशिरितिकैश्चिद्व्याख्यातंतन्नवैषम्यबीजाभावादरिशब्देनाष्टमराशिः कुतोनगृह्यतइति· एवंचेन्मुनेस्तात्पर्यंतर्हितत्रापि
रिष्फतंतुनाथदृश्यनवभागाद्वेतिकुतोनोक्तमित्यलं ३४ अथनिर्याणदशाविशेषंप्रकारांतरेणादर्शयितुंरुद्रग्रहंलक्षयति· लग्न
सप्तमाभ्यांयावष्टमेशौतयोर्यः प्राणीबलवान्सरुद्रसंज्ञोग्रहोभवतीत्यर्थः ३५ द्वितीयरुद्रमाह लग्नसप्तमाभ्यांयोष्टमाधीशोदुर्ब
लः सोपिपापदृष्टश्चेद्रुद्रः स्यात् तथाचद्वौरुद्रौभवतः प्राणीअप्राणीचेति ३६ प्राणिरुद्रस्यफलमाह ॥ ॥ ॥

बलवति रुद्रे शुभदृष्टे सति रुद्रशूलांतं रुद्रात्प्रथमपंचमनवमदशांतमायुर्भवति अल्पमध्यदीर्घायुर्योगभेदात्प्रथमद्विती
यतृतीयत्रिकोणांतेवाऽऽयुःसमाप्तंभवतीत्यर्थः ३७ अप्राणिरुद्रे विशेषमाह तत्रद्वितीये रुद्रेपि शुभयोगे सति रुद्रशूलांत
मायुर्भवति न तु शुभदृष्ट्येतिभावः ३८ उक्तयोगेपवादमाह· रविं विहायेतरपापयोगे सति इदं फलं न भवति रवियोगे तु नास्य
फलस्य भंग इति ३९ अथ रुद्रद्वयस्य गुणविशेषेण फलं दर्शयति॥ ॥प्राणिन्यप्राणिनि वा रुद्रे मंदारेंदुदृष्टे शुभयोगाभावे ए
को योगः मंदारेन्दुदृष्टे रुद्रद्वये पापयोगेपि वा द्वितीयो योगः मंदारेन्दुदृष्टे रुद्रद्वये शुभदृष्टो वास्यात्तां तृतीयो योगः प्रथमयोगे शुभ

प्राणिनि शुभदृष्टे रुद्रशूलांतमायुः ३७ तत्रापि शुभयोगे ३८ व्यर्कपापयोगेन ३९ मंदारेंदुदृष्टे शुभयोगा
भावे पापयोगेपि वा शुभदृष्टो वा परतः ४० ॥

योगाभावे इत्यनेन पापयोगे द्वितीययोगे वक्तव्ये शुभपापरहिते रुद्रेऽयम
र्थः संपन्नः योगत्रये संपूर्णे सति रुद्रशूलांतात्परतोऽग्रे आयुःसमाप्तिर्भवतीत्यर्थः ॥ वाकारद्वयमनास्थायामित्युक्त्वा योगद्वयपरमि
ति पंथे रुक्तं तन्न वाकारद्वयस्यानास्थाकल्पनायां प्रमाणाभावाद्योगत्रयपरमेव वाकारद्वयेन लभ्यत इति· अस्मिन्प्रकरणे शुभ
पापावृद्धैरुक्ताः अर्कारमंदफणिनः क्रमात्क्रूरा यथाश्रयं चंद्रोपि क्रूर एवात्र क्वचिदंगारकाश्रये गुरुध्वजकविज्ञाः स्युर्य
थापूर्वं शुभग्रहा इति· अयमर्थः अर्काद्या उत्तरोत्तरं यथाश्रयं क्रूरराशिगताः क्रूरा भवंति· शुभराशिगतास्तु न पापाः किं
तु शुभा एव गुर्वादयस्तु शुभाः यथापूर्वं बुधात्कविः कवेः केतुः केतोर्गुरुरिति क्रमेणोत्तरोत्तरं शुभाः क्रूरग्रहाणां यथा क्रूर

राम:
२५

शुभत्वं तथा गुर्वादीनामपि शुभाश्रये एवं शुभतानक्रूराश्रये शुभता एवमेव वृद्धैरप्युक्तं· प्रत्येकं शुभराशिस्थ उच्चस्थो वा बुधः शुभः गुरु
शुक्रौ च सौम्यस्थौ ततोन्यत्राशुभाः स्मृता इति यदि शूले मृतिस्तर्हि कस्मिन् शूले स्यादित्यत्र वृद्धैर्विशेषो निरुक्तः पापमात्रस्य शूलत्वे प्रथमर्क्षे
मृतिर्भवेत् मिश्रे मध्यमशूलर्क्षे शुभमात्रे त्वन्त्यमे मृतिरिति अस्यार्थः द्वौ रुद्रौ यदि पापौ तर्हि प्रथमशूले मृतिः स्यात् यद्येको रुद्रः शुभोऽपरः
पापस्तर्हि मध्यशूले मृतिः द्वावपि रुद्रौ यदि शुभौ तर्ह्यन्त्यशूले मृतिः स्यादिति ५०॥ रुद्राश्रितराशावपि कदाचिन्मरणयोगमाह रुद्रा
श्रयराशावप्यायुः समाप्तिर्भवतीत्यर्थः प्रायः शब्द्राद्रुद्राश्रयात्पूर्वे परतो वाऽऽयुः समाप्तिर्भवतीति ध्वनितं ५१ अत्र विशेषमाह

**रुद्राश्रयेपि प्रायेण ५१ क्रियेपि तरि विशेषेण ५२ प्रथममध्यमोत्तमेषु वानत्तदायुषां ५३ स्वभावेशो महे**
**श्वरः ५४ स्वोच्चे स्व गृहे रिपुभावेशं प्राणी ५५ ॥** मेषे जन्मलग्ने सति विशेषेण रुद्राश्रये आयुः समाप्तिर्भवति योगभेदेन
निधनस्थानं दर्शयति ५२ तत्तदायुषामल्पमध्यदीर्घायुर्योगवतां प्रथममध्यमोत्तमेषु प्रथमद्वितीयतृतीयरुद्रशूलेषु वा क्रमेण
युः समाप्तिर्भवति रुद्रशूलराशिमह्यादशायां निधने सिद्धे कस्यामंतर्दशायां निधनमित्यर्थः॥ अत्र शूले चेदित्युक्त्या रुद्रशूलनिर्या
णयोगे सत्यपि बलवत्तरयोगांतरवशात्तो रुद्रशूलनिर्याणबाधोपि भवतीति ध्वनितं ५३ अथ फलविशेषकथनाय महेश्वरग्र
हं लक्षयति स्वादात्मकारकाद्वा वेशोऽष्टमराशीशो महेश्वरग्रह इत्यर्थः ५४ यदि कारकादष्टमेशः स्वोच्चे स्वगृहे वा स्यात्तदा कार
काद्द्वादशाष्टमेशयोर्मध्ये यो बली स एव महेश्वरः स्यान्नतु स्वभावेश इत्यर्थः द्वावपि तुल्यबलौ चेद्द्वौ ॥

महेश्वरो भवत एव स्वोच्चे स्वग्रहे इति पाठे तु कारकोच्चराशौ ग्रहद्वये सति कारकादष्टमद्वादशेशयोर्मध्ये योबली स महेश्वरः अस्मि
न्पक्षे प्रकारांतरेणापमपि महेश्वर इत्यर्थः ५५ प्रकारांतरेण महेश्वरमाह स्वस्य कारकस्य पाताभ्यां राहुकेत्वोरन्यतरेण योगे
तथा कारकाद्रोगेऽष्टमे तयो राहुकेत्वोर्योगे वा सति कारकान्तरव्यादिप्रसिद्धगणनया नतः षष्ठो ग्रहो महेश्वरो भवति द्वित्रीणां महे
श्वराणां संभवे योबली स एव महेश्वरः स्यादिति· ५६ अथ ब्रह्मग्रहमाह पितृलाभप्राणीति सूत्रमध्ये स्थितत्वाद्देहलीदीपक
न्यायेन लग्नसप्तमयोर्योबलवद्राशिस्तस्मात् षष्ठाष्टमद्वादशराशिस्वामिनां मध्ये योबलवान्भवन्नेव लग्नतन्सप्तमराश्योर्मध्ये

**पाताभ्यां योगे स्वस्य तयोर्वा रोगे ततः ५६ प्रभु भाववैरीशप्राणी पितृलाभप्राण्यनुचरो विषमस्थो ब्रह्मा ५७**
**ब्रह्मणि शनौ पातयोर्वा ततः ५८ बहूनां योगे स्वजातीयः ५९ राहुयोगे विपरीतं ६०॥** योबलवद्राशिस्तस्मात्षष्ठ

गश्च सन् मेषमिथुनादिविषमराशिगतः स्यात्स एव ग्रहो ब्रह्मा भवतीति लग्नस्य षष्ठराशेः सप्तमादिद्वादशांतं सप्तमस्य षष्ठरा
शेर्लग्नादिषष्ठांतं बोध्यं ५७ प्रकारांतरेण ब्रह्माणमाह शनौ ब्रह्मणि ब्रह्मलक्षणाक्रांते सति पातयो राहुकेत्वोर्वा ब्रह्मणः स
तोस्तस्माच्छनेराहोः केतोर्वा ततः षष्ठो ग्रहो ब्रह्मा भवतीत्यर्थः ननु ब्रह्मलक्षणाक्रांतनयाप्रसक्तः शन्यादिर्ब्रह्मा स्यात् ५८ बहूनां
ब्रह्मलक्षणाक्रांतत्वे कतमो ब्रह्मा स्यादित्याशंकायामाह बहूनां ग्रहाणां ब्रह्मयोगे सति स्वजातीयः कारकजातीयोऽधिकां
शको ब्रह्मा स्यादित्यर्थः ५९ अत्रैव विशेषमाह॥ राहोर्ब्रह्मणा सह संयोगे सति विपरीतं बहूनां ब्रह्मणां मध्ये ॥ ॥

योन्यूनांशकः स एव ब्रह्मा स्यात् शनिराहुकेतूनां ततइत्युक्त्या ब्रह्मत्वाभावात् ब्रह्मत्वे सति तु राहोर्ब्रह्मत्वयोगे राहुर्न्यूनांशश्चे द्ब्रह्मा स्यादित्यर्थः स्यादिति ५० ॥ पुनः प्रकारांतरेण ब्रह्माणमाह कारकादष्टमेशः कारकादष्टमस्थश्च ग्रहो ब्रह्मा स्यात् यत्तु अष्टमेशत्वे सत्यष्टमराशिगतत्वमेव ब्रह्मत्वे प्रयोजकत्वमिति मतं तन्न तथा सति विवादप्रसक्त्यभावेनैतत्सूत्रमनन्वितं स्यात् न ह्येतत्पूर्वान्वितं व्यवहितत्वाद्ग्रंथास्वारस्यप्रसक्तेः बहूनामिति सूत्रेणैव शंकायाः उपक्षीणत्वाच्चेति ५१ अष्टमेशाष्टमस्थ योरेकत्वे निर्विवादं ब्रह्मत्वं तयोर्भेदे तु कतमो भवेदित्यत्राह विवादे द्वयोर्ब्रह्मत्वे सति यो बली स एव ब्रह्मा स्यात् ॥ अथवा सर्वेषु ब्र।

ब्रह्मास्वभावे शोभावस्थः ५१ विवादे बली ५२ ब्रह्मणो यावन्महेश्वरर्क्षदशांतमायुः ५३ तत्रापि महेश्वर भावेशत्रिकोणाब्दे ५४ स्वकर्मचित्तरिपुरोगनाथप्राणी मारकः ५५ ॥

ह्मसु समानांशवत्सु योऽग्रहात्स ग्रह इत्यादिना बली स ब्रह्मा भवतीत्यर्थः ॥ अथ ब्रह्ममहेश्वरयोः फलमाह ५२ स्थिरदशायां ब्रह्मग्रहाश्रितराशिमारभ्य महेश्वरराशिदशापर्यंत मायुर्भवतीत्यर्थः ५३ महादशायां निधनाश्रयीभूतमंतर्दशामाह तत्रापि महेश्वराश्रितराशिमहादशायामपि महेश्वराश्रितराशि तोऽष्टमराशिनाथस्य यस्त्रिकोणराशिः प्रथमपंचमनवात्मको राशिस्तस्यैकाब्दात्मको योंतर्दशाकालस्तत्र मृत्युः स्यात् अब्द इति द्वादशवर्षैस्तत्र द्वाशिदशेत्यभिप्रायेणान्यूनसंख्यादशासत्वे त्वब्दतो न्यूनमंतर्दशास्वप्यानेयमेव ५४ अथ सूत्रद्वयेन मारक ग्रहं लक्षयति चित्तनाथः प्रायेणास्मादात्मकारकात्तृतीयषष्ठद्वादशाष्टमेशानां मध्ये यो बलवान् स मारकग्रह इत्यर्थः ॥

सर्वेषां समबलत्वे सर्वेपि मारकाः स्युः॥ बहूनां मारकत्वे कस्य दशायां निधनमित्याशंकायां अल्पमध्यदीर्घायुषां यत्र यत्र यस्य संभवस्त
द्राशिदशायां निधनमित्यर्थः॥ षष्ठेशस्तु प्रायेण मुख्यतया मारक इत्यर्थः॥ अत्र वृद्धैरप्युक्तं॥ षष्ठाष्टमेशौ भवतो मारकावष्टमे
श्वरः प्रायेण मारको राशिदशास्वत्राविशेषतः षष्ठभे पापभू पि षष्ठे षष्ठेशो मुख्यमारकः॥ षष्ठात्रिकोणगो वापि मुख्यमारक उ
च्यते· मध्यायुषि मृतिः षष्ठदशायामष्टमस्य वा षष्ठत्रिकोणस्य पुनर्दीर्घाल्पविषये भवेत् षष्ठे बलयुते तस्य त्रिकोणे मृतिमादिशेत्
षष्ठेशश्चेद्बलाढ्यः स्यात्तत्त्रिकोणे मृतिं वदेदिति। व्यवस्थेयं समस्तापि कारकादिदशास्वपि बलिनः शुक्रशशिनोर्ग्राह्यं षष्ठाष्टमा
दिकं श्लोकाः स्पष्टार्थाः ५५ मारकस्य फलमाह· मारकग्रहाश्रितस्य मारकस्वामिकस्य महादशायां चरस्थिरादिरूपायां नि

॥ तद्दस्दशायां निधनं ५६ तत्रापि कालाद्रिपुरोगचिंतनाथापहारे ५७॥

धनं स्यादित्यर्थः ५६ मारकमहादशायां निधनाश्रयीभूतामंतर्दशामाह· तत्रापि मारकग्रहदशायामपि कालात्कारकसप्तमा
द्वादशाष्टमषष्ठेशानामंतर्दशायां निधनं स्यादित्यर्थः एषां मध्ये बलवतोंतर्दशायां निधनमिति विवेचनीयम् अत्र विशेषो वृ
द्धैरुक्तः॥ चरे चरस्थिरद्वंद्वाद्द्रुनि योराशिरागतः स एव मारको राशिर्भवतीति विनिर्णयः॥ बहुराशिसमावेशे बलवान्मारकः स्मृ
तद्रुनि॥ अयंभावः। पितृदिनेशादिद्विकानामाश्रयीभूतो राशिः समारकस्तेराशयो यदि बहवस्तर्हि अग्रहात्सग्रह इत्यादिबलेन यो
राशिर्बलवान्स मारकस्तद्राशिदशायां तदीशाश्रयराशिदशायां वा मृतिरिति अपरे तु चरद्रुन्यादिनायुर्यत्नत्समाप्तुचितो भवेत

योराशिः सतु विज्ञेयो मारकः सूत्रसंमत इति चरइत्यादिश्लोकेन यद्दीर्घायाद्युः समागतं पूर्णमित्यादिनास्पष्टीकृतं तदायुर्यद्राशौ समाप्तं तद्राशिरेव मारक इत्यर्थः ॥५७॥ इति जैमिनिसूत्रव्याख्यायां सुबोधिन्यां द्वितीयाध्यायस्य प्रथमः पादः पित्रादीनां निधनकालं बोधयितुं पित्रादिकारकमुपदिशति सूर्यभार्गवयोर्मध्ये यो बलवान्स पितृकारकः स्यात् १ चंद्रभौमयोर्यो बली स मातृकारकः २ रविशुक्रयोश्चंद्रारयोश्च मध्ये यो निर्बलः सोपि पापग्रहदृष्टश्चेद्यथाक्रमं पितृमातृकारकतां लभते ३ अथ प्राणिपित्रादिकारकस्य फलमाह पितृकारके मातृकारके वा प्राणिनि शुभदृष्टे सति पितृमातृकारकाश्रितराशित्रिकोणदशायां पितुर्मातुश्च मरणं हि

रविशुक्रयोः प्राणी जनकः १ चन्द्रारयोर्जननी २ अप्राणपि पापदृष्टः ३ प्राणिनि शुभदृष्टे तच्छूले निधनं मातापित्रोः ४ तद्भावे शेसस्पष्टबले ५ तच्छूल इत्यन्ये ६ आयुषि चान्यत् ७ अर्कज्ञयोगे तदाश्रये क्रिये—

लग्नमेषदशायां पितुरित्येके ८ ॥ यं ४ द्विविधकारकस्य फलमाह स्पष्टं ५ ताभ्यां प्राण्यप्राणिकारकाभ्यां भावे शेषे मे शेपितृमातृकारकात्स्पष्टबलेऽधिकबले सत्यष्टमेशाश्रितराशितस्त्रिकोणराशिदशायां निधनं भवतीत्यन्ये प्राहुः अधिकबल इति वक्तव्ये स्पष्टबल इत्युक्त्यांशाधिक्यबलमत्र ग्राह्यं ६ पित्रादीनामायुषि विचारणीये अन्यच्चतत्तत्कारकं प्रकारांतरोक्तनिर्याणशूलदशादिकं च विचार्यमित्यर्थः ७ पितृनिधने विशेषमाह क्रिये लग्नाद्द्वादशराशौ तदाश्रये र्क बुधाश्रये सिंहमिथुनकन्यान्यतरराशिसत्वेऽर्कज्ञयोगे सूर्यबुधयोर्योगे सति लग्नमेषदशायां लग्नात्पंचमराशिदशायां पितुर्निधनं स्यादित्येके वदंति लग्ने

युक्ते मेषराशौ रविन्नयोगाश्रये लग्ने सति मेषस्य दशायां पितुर्निधनमित्यर्थः ८ अथवाल्पएव मातापित्रोर्मरणयोगमाह पित्रोः मातापितृकारकयोः प्राणिनोरप्राणिनोर्वा रविरहितपापमात्रेण दृष्टयोः सतोर्द्वादशाब्दात् पूर्वमेव मातापित्रोर्यथाक्रमं निधनं भवति रविशुभदृष्टौ नायं योग इति ९ स्त्रीनिधनमाह गुर्वाश्रितराशित्रिकोणदशायां पत्नीनिधनं स्यात् १० एवमन्येषामपि निधनमाह पुत्रमातुलादिकारकराशे स्त्रिकोणदशायां पुत्रमातुलादेर्निधनमित्यर्थः ११ मरणे शुभाशुभभेदं दर्शयति सूत्रैः लग्नात्कारकाद्वा तृतीये पापेन युते दृष्टे वा दुष्टं मरणं भवति १२ लग्नात्कारकाद्वा तृतीये शुभेन युक्ते दृष्टे वा शुभं मरणं

स्वर्के पापमात्रदृष्टयोः पित्रोः प्राग्द्वादशाब्दात् ९ गुरुशूले कलत्रस्य १० तत्तच्छूले तेषां ११ कर्मणि पापयुतदृष्टं मरणं १२ शुभं शुभदृष्टियुते १२ मिश्रे मिश्रं १३ आदित्येन राजमूलात् १४ चंद्रेण यक्ष्मणः १५ कुजेन व्रणशस्त्राग्निदाहाद्यैः १६ शनिना वातरोगात् १७ ॥

स्यात् अग्निजलपानबंधनादिप्रयोज्यं दुष्टं मरणं ज्वरादिरोगप्रयोज्यं शुभमुच्यते १२ शुभपापयोर्द्वयोरपि दृष्टौ योगे वा शुभाशुभात्मकं मरणमित्यर्थः १३ मरणनिमित्तानि दर्शयति तृतीये रवियोगे दृष्टौ वा सत्यां राजहेतोर्मरणं १४ तृतीये चंद्रेण युते दृष्टे वा यक्ष्मतः क्षयरोगान्मरणं १५ तृतीये कुजेन युते दृष्टे वा व्रणादितो निधनम् १६ तृतीये शनिना युते दृष्टे वा वातरोगतो निधनं १७ ॥

तृतीये शनिगुलिकाभ्यां युते दृष्टे वा विषादिभिर्मरणं गुलिकस्यस्पष्टीकरणमन्यत्रानुसंधेयं १८ तृतीये केतुना युते दृष्टे वा वि
षूच्यादिना मरणं १९ तृतीये चंद्रगुलिकाभ्यां युते दृष्टे वा क्रमुकमदादिनासत्वरं मरणं २० तृतीये गुरुणा युते दृष्टे वा शोफादिभिर्नि
धनं २१ तृतीये शुक्रेण युते दृष्टे वा प्रमेहरोगान्निधनं २२ तत्तद्रोगाणां बहूनां तृतीये योगे दर्शने वाऽनेकरोगान्निधनं २३ तृती
ये तत्तद्ग्रहयोगदर्शनसत्वे तत्रैव चंद्रदृष्टियोगसत्वे तत्तद्रोगान्निश्चयेन मरणं वक्तव्यमित्यर्थः एतेन चंद्रदृग्योगाभावे तृ ।

मंदमांदिभ्यां विषसर्पजलोद्बंधनादिभिः १८ केतुना विषूचीजलरोगाद्यैः १९ चंद्रमांदिभ्यां पूगमदान्नक
वलादिभिः क्षणिकं २० गुरुणा शोफाऽरुचिवमनाद्यैः २१ शुक्रेण मेहात् २२ मिश्रैर्मिश्रात् २३ चंद्रदृ
ग्योगान्निश्चयेन २४ शुभैः शुभदेशे २५ पापैः कीकटे २६ गुरुशुक्राभ्यां ज्ञानपूर्वं २७ अन्यैरन्यथा २८
लेपनकयोर्मध्ये शनिराहुकेतुभिः पित्रोर्न संस्कर्ता २९ ॥ तीयस्थानगेनापि तत्तद्ग्रहेण तत्तद्रोगमरणे संदेह इति
ध्वनितं २४ अथ निधने देशभेदं दर्शयति सूत्राभ्यां स्पष्टं २५ अत्र बहुत्वमविवक्षितं तृतीये शुभदृग्योगसत्वे शुभे देशे पुण्य
भूमौ मरणं पापैस्तु कीकटे मगधादिपापदेशे मरणमित्यर्थः शुभपापोभययोगे तु नकाश्यादिशुभे न मगधादिपापे देशादिति
२६ मृतौ ज्ञानाज्ञानपूर्वकत्वमाह स्पष्टं २७ लग्नात्कारकात्तृतीये गुरुशुक्राभ्यां युते दृष्टे वा ज्ञानपूर्वं मरणं गुरुशुक्रातिरिक्तयो
गदर्शनाभ्यामज्ञानपूर्वं मरणं २८ फलांतरमाह लग्नद्वादशयोर्मध्ये शनिराह्वोः शनिकेत्वोर्वा स्थित्या मातापित्रोः संस्कर्तान

पात् २९ लग्नद्वादशमध्यं प्रकटयति ॥

लग्नादिपूर्वार्द्धे लग्नादिप्रथमषट्के द्वादशाद्यपरार्द्धे द्वादशाद्युत्तरषट्के शनिराहुशनिकेतुसत्वे मातृपित्रोः क्रमात्संस्कर्त्ता न तथा च लग्नादिषट्के शनिराहुशनिकेतुसत्वे मातुः संस्कर्त्ता न सप्तमादिषट्के शनिराहुशनिकेतुसत्वे पितुः संस्कर्त्ता नेति फलितार्थः शन्यादित्रिकसत्वे इति कुतो नोक्तमिति चेत् राहुकेत्वोरेकस्थानस्थितेर्बोधत्वान्नोक्तमिति ३० अपवादमाह॰ तत्र लग्नादिद्वादशादिमध्ये शुभदृग्योगसत्वे पूर्वोक्तयोगो न स्यात्किंतु पित्रोः संस्कर्त्ता स्यात् ३१ इति श्रीजैमिनिसूत्रव्याख्यायां सुबोधिन्यां द्वितीयाध्यायस्य द्वितीयः पादः २॥ अथ दशाभेदबलभेदादीनाह॰ तत्रादौ नवांशदशामाह॥ विषमे लग्ने सति तदादिर्नवांशदशा स्यात्

लेपादिपूर्वार्द्धे जनकाद्यपरार्द्धे ३० शुभदृग्योगान्न ३१ इति" विषमे तदादिर्नवांशः १ अन्यथाऽऽदर्शादिः शशिनंदपावकाः क्रमादब्दाः स्थिरदशायां ३ ब्रह्मादिरेषा ४॥

अन्यथा सप्तमराशौ लग्ने सत्यादर्शादिः सप्तमराश्यादिर्नवांशदशा स्यात्॰ आदर्शः संमुखो भवति संमुखराशिः सप्तम एव भवति॥ एतद्दशायां प्रतिराशि नव नवाब्दा भवंतीति नवांशदशेति नामधेयं ज्ञेयं यत्तु स्थिरराशेः षष्ठराशिश्चरस्याष्टम एव सः द्विस्वभावस्य राशिस्तु सप्तमः संमुखो मत इति श्लोकं कृत्वा संमुखत्वं पंथेरुक्तं तन्न तद्दृष्टिपरमेव न तत्वन्यपरं १ अथ स्थिरदशामाह सप्तम२ चरस्थिरद्विस्वभावराशीनां क्रमेण सप्ताष्टनवाब्दा नियताः स्थिरदशायां भवंतीत्यर्थः तथा च मेषे सप्त वृषेऽष्टौ मिथुने नव पुनः कर्के सप्तेत्यादिक्रमेण द्वादशराशिपर्यंतमब्दा ज्ञातव्याः ३ एतद्दशारंभस्थानमाह एषा दशा ब्रह्मग्रहादिर्वै ब्रह्मग्रहाश्रितराशिमारभ्य प्रवर्त्तनीयेत्यर्थः ४ अथ बलमधिक

अथानंतरं प्राणोवलमुच्यते ५ राशीनामाद्यंवलंकारकयोगोभवति ६ ग्रहयोगसाम्येउभयत्रग्रहसत्वमतिभूयसाग्रहयोगेनवलंभ
वति ७ ग्रहयोगभूयस्त्वादिभिरपिसाम्येनिर्णायकमाह ततोभूयस्त्वानंतरंतुंगादिर्वलंस्यात राशेस्तुंगस्वगृहस्वमित्रगृहस्यग्रह
योगः प्राणइत्यर्थः ८ अथराशीनांनिसर्गवलमाह ततस्तुंगादिवलानंतरंनिसर्गवलंग्राह्यं चरात्स्थिरः स्थिराद्विस्वभावोवली-
त्यर्थः तदुक्तं वृद्धैः अग्रहात्सग्रहोज्यायान्सग्रहे ष्वधिकग्रहः साम्येचरस्थिरद्वंद्वाः क्रमात्सुर्वलशालिनइति ९ राशीनदभावे
कारकयोगाद्यभावे स्वामिनौराश्याधिपतेरित्थंभावः कारकयोगादिर्वलं यद्राशिनाथोवलवान्सराशिर्वलीतिभावः १० एकरा

अथप्राणः ५ कारकयोगः प्रथमोभानां ६ साम्येभूयसा ७ ततस्तुंगादिः ८ निसर्गस्ततः ९ तदभावेस्वामिनइत्थंभा
वः १० आग्नायतोत्रविशेषात ११ प्रातिवेशिकः पुरुषे १२ इतिप्रथमः १३ स्वामिगुरुज्ञदृग्योगोद्वितीयः १४ ॥

शौवहुग्रहेषुसत्सुतेषांराशिद्वारकवलसाम्येपिअत्रास्मिन्ग्रंथे आग्नायतोग्रहोविशेषाद्वलीभवतिअग्नमायनःगतः अग्नायतः अ
ग्नायनएव आग्नायतः अधिकांशकइतियावत तथाचवहुग्रहेष्वेकराशिस्थेष्वधिकांशकोवलवानिति ११ पुरुषेओजराशौप्रातिवे-
शिकः पार्श्वराशिवर्तीद्विद्वादशगतोपिग्रहः स्वस्यवलकर्तास्यात १२ इतिप्रोक्तप्रकारेणप्रथमः प्राणउक्तइत्यर्थः १३ स्वामियोगोगु
रुयोगोवुधयोगश्चैवैकैकशोराशीनांवलंभवति स्वामिदृष्टिर्गुरुदृष्टिर्वुधदृष्टिश्चैवैकैकशोद्वादशराशीनांवलंस्यात एवंषड्वलानिद्वि
तीयः प्राणइत्यभिधीयते द्वितीयंभाववलमित्यग्रिमसूत्रेद्वितीयंवलंग्राह्यमितिस्पष्टीकृतं १४ ॥ ॥

स्वामिनो राश्यधिपतेर्वक्ष्यमाणः प्राणस्तृतीयः प्राणादृत्यर्थः अथ स्वामिबलावलेदर्शयति १५ स्वादात्मकारकात्कंटकादिषु केंद्रपण फरापोक्लिमेषु स्वामिनोऽपारदौर्वल्यं भवति केंद्रे पूर्णत्वं पणफरे एकं आपोक्लिमे द्विगुणं दौर्वल्यं भवति १६ चतुर्थतः पापदृग्योगदृत्यादि नावक्ष्यमाण चतुर्थबलादपि पुरुषे विषमराशौ बलं भवतीत्यर्थः यत्तु चतुर्थतः प्रथमं नानासिरिन्युक्ता पुरुषे चतुर्थः प्राणइति केश्चिदुक्तं तदयुक्तं एवं चेन्मुनेस्तात्पर्ये तर्हि चतुर्थः पुरुषे इत्येव ब्रूयात् चतुर्थबलं किमिति शंकानिरासायेति चान्वारदृत्यग्रेवक्ष्यतिननु तद्बलमप्यत्रैव कुतो नोक्तमिति चेत् तद्बलस्य सांप्रतमनुपयोगादुपयोगिबलमुक्त्वा काष्ठनदशाः प्रदर्श्य वक्ष्यतीति १६ अ

**स्वामिनस्तृतीयः १५ स्वात्स्वामिनः कंटकादिष्वपारदौर्वल्यं १६ चतुर्थतः पुरुषे १७ पितृलाभप्रथमप्राण्यादि शूलदशा निर्याणे १८ पितृलाभपुत्रः प्राण्यादिः पितुः १९ आदर्शादिर्मातुः २० कर्मादिर्भातुः २० मात्रादिर्भगिनीपुत्रयोः २१**

थ निर्याणशूलदशामाह १६ लग्नसप्तमयोर्यः प्रथमबलवान्तदादिगणनया प्रवृत्तदशा या पदालग्नसप्तमान्यतरत्रिकोण ७।१।५।९। राशिदशा तदा निर्याणं भवतीत्यर्थः अत्र नवनवाब्दाग्राह्याः पुरुषे समाः सामान्यतदृतिसूत्रस्य वक्तव्यत्वात् १७ पितुर्निर्याणदशामाह लग्नसप्तमयोर्यो पुत्रराशीनवमराशीतयोर्मध्ये बलवान् तमारभ्य क्रमेण प्रवर्तितया दशया प्राक्करीत्या शूलदशायां पितुर्निर्याणं भवति १८ मातुर्निर्याणदशामाह लग्नात्ससमाद्वा बलिनश्चतुर्थराशेः शूल ४।५।१०। दशायां मातुर्निर्याणं स्यात् १९ लग्नात्सप्तमाद्बा बलिनस्तृतीयराशेः शूलदशायां भ्रातुर्निर्याणं २० मातृआदिरितिपदच्छेदः लग्नात्ससमाद्बावलिनः पंचमराशेः प्रवृत्तशूलदशायां भगिनी पुत्रयोर्निर्याणं २१॥

लग्नात्सप्तमाद्वा बलिन एकादशराशेः प्रवृत्तायां दशायां ततः शूलदशायां ज्येष्ठभ्रातुर्निर्याणं २२ लग्नात्सप्तमाद्वा बलिनो नवमरा
शेः प्रवृत्तायां दशायां ततः शूलदशायां पितृवर्गस्य पितृव्यादेर्निर्याणं स्यात् २३ अथ ब्रह्मदशामाह पुरुषे विषमे जन्मलग्ने सति ब्रह्मादि
ब्रह्मग्रहाश्रितं राशितो दशाः प्रवर्तनीयाः समा दासांताः कोऽर्थः स्वराशेः षष्ठराशिस्वाम्यंतं समा दशा व्याख्याः ननु दासांतशब्देन षष्ठरा
शिस्वाम्यंतमित्यर्थः कथमिति चेत् शृणु षष्ठराश्यंतवर्षानयने सर्वेषां समत्वाद्दासस्तत्युत्तरवर्षाभावाच्चायोग्यत्वात्स्वाम्यंतमित्यर्थः
संपन्न इति चेद्वर्षानयने ब्रह्मादिगणनानंतरं पुरुषे ब्रह्मादिसमा दासांता इति सूत्रं प्रणीतं स्यादित्यलम् २४॥ तत्र स्थानव्यतिकरः॥ स
प्तमसंबंधोऽस्ति अयंभावः विषमे आदौ ब्रह्माश्रितराशिदशा ततः क्रमेणान्येषां समे लग्ने तु आदौ ब्रह्माश्रितसप्तमराशिदशा ततो

**व्ययादिर्ज्येष्ठस्य २२ पितृवत्पितृवर्गे २३ ब्रह्मादिपुरुषे समा दासांताः २४ स्थानव्यतिकरः २५ पापदृग्योगाः**
**॥ तुंगादिग्रहयोगः २६**

व्युत्क्रमेणान्येषां राशीनां दशाः विषमे ब्रह्मादि समे तु ब्रह्मसप्तमादिक्रमव्युत्क्रमभेदेन दशा आने
या इति फलितार्थः २५ अथ चतुर्थं बलमाह पापग्रहाणां दृष्टियोगश्च राशेर्बलं भवति तुंगमूलत्रिकोणस्वर्क्षातिमित्रमित्ररा
शिस्थितशुभग्रहयोगश्च बलं स्यादित्यर्थः यत्तु तुंगादीति ग्रहयोग इति योगविभागं कृत्वा तुंगादिबलं ग्रहयोगबलं चेत्युक्तं पं
थे तन्न पापदृग्योग इति सूत्रेण पापयोगबलमुक्तमेव ग्रहयोग इति सूत्रेणैव तदर्थलाभात्पापदृगित्येव वक्तव्ये योगपदं व्यर्थं
स्यात् तस्मात्पापग्रहाणां यत्र कुत्र स्थितानामपि योगे बलं शुभग्रहाणां तु तुंगादिस्थानामेव योगे बलं न त्वन्यत्रस्थानामिति भावः इति

कारकयोगइत्यादिनात्रयः पूर्वोक्ताः एकोयमितिचत्वारः प्राणाइत्यर्थः २६ पूर्वोक्तचरदशायांक्रमव्युत्क्रमभेदमाह २६ त्रिभि स्त्रिभिर्भैरसमंसमंचपदानिचत्वारिभवंतिचक्रइति लग्नान्नवमेओजपदांतर्गतराशिश्चेत्क्रमात् युग्मपदांतर्गतराशिश्चेद्व्यु त्क्रमाद्दशानेयापूर्वेचरदशावर्षानयनमात्रमुक्तंक्रमव्युत्क्रमभेदस्तुनोक्तस्तस्मादत्रोक्तंदशारंभावधेरनुक्तत्वाल्लग्नमेवा त्रग्राह्यमिति २७ अस्यांचरदशायांकेतुःशुभःशुभग्रहफलदइति २८ ॥ इतिश्रीजैमिनिसूत्रव्याख्यायांसुबोधिन्यांद्वितीया ध्यायस्यतृतीयःपादः ३॥ चरराशेर्नवांशाद्दशायांद्वितीयंभाववलंस्वामिगुरुज्ञदृग्योगइतिफलादेशायग्राह्यमित्यर्थः १ अथ द्वारवाह्यराशीन्दर्शयति १ स्यष्टं २ यस्मिन्कालेयस्यराशेर्यादशाचरस्थिरपर्यायनस्तद्दशाश्रयोराशिर्द्वारमित्युच्यतेएनमेवपाक

पंचमेपदक्रमात्याक्रमत्यक्तं २७ चरदशायामत्रशुभःकेतुः २८ द्वितीयंभाववलंचरनवांशे १ दशाश्र योद्वारं २ ततस्तावतिथंवाह्यं ३॥

राशिरितिव्यवहरंति लग्नाद्यावत्संख्याकोद्वारराशिस्तस्मात्तावत्संख्याकोराशि र्वाह्यमितिनिगद्यतेएनमेवभोगराशिंवदंति अत्रलग्नशब्देनजन्मकालेयद्राशितःप्राथमिकीदशासमारभ्यते सराशिर्ग्रा ह्यःलग्नंसप्तमोवात्रस्तयग्रहाद्याश्रितराशिर्वायथायोगमाद्यदशाश्रयराशिरेवपाकराशेरवधिर्नतुप्रसिद्धंलग्नं एवंचेन्मो च्यतेतर्हिसएवभोगराशिश्चपर्यायेप्रथमेस्यात्इतिनलगति यत्रसप्तमाद्ग्रहाश्रितराशितोवादशाप्रवृत्तिस्तत्रयःपाक राशिः सएवभोगराशिरितिनसंभवतितदुक्तंवृद्धैः चरेऽनुज्झितमार्गःस्यात्षष्ठषष्ठादिकाःस्थिरेउभयेकंटकाद्येयालग्नपं

क्रमोमतः तेषैवत्रिषुयुग्मेषुग्राह्यंव्युत्क्रमतोखिलं एवमुदितुखिनोराशिः पाकराशिरितिस्मृतिः सएवभोगराशिश्चपर्यायेप्रथ
मेस्यतः लग्नाद्यावतिथः पाकः पर्यायेयत्रदृश्यते तस्मात्तावतियोभोगः पर्यायेतत्क्रमाद्भवेत् तदिदंचरपर्यायस्थिरपर्याययोर्द्वयोः
त्रिकोणाख्यदशायांचपाकभोगप्रकल्पनमिति· पर्यायेदशायामित्यर्थः ३ अथद्वारवाह्ययोः फलमाहत्रिभिस्सूत्रैः ॥ तयोर्द्वारवा
ह्ययोः पापग्रहेसतितद्दशायांवंधादिःस्यात् तदुक्तंवृद्धैः पाकेभोगेचपापाढ्येदेहपीडामनोव्यथेति ४ तस्मिन्द्वारेवाह्येवाराशौ
पापाश्रयीभूतेऽस्यपापस्यपरंतूपजीवस्यउपसमीपेजीवोयस्येतिगुरुसमीपवर्तिनः स्वर्क्षेस्थितोसत्यांनवंधादिरित्यर्थः पाकभो
गाश्रितः पापोयदिस्वर्क्षेगुरुयुक्तस्तद्युक्तदोषोनेतियावत् ५ अस्मिन्द्वारेवाह्येवाराशिस्थिताभ्यांयातायेयोगास्तेषूक्तं सर्वंशुभाशु

तयोः पापेवंधयोगादिः ४ स्वर्क्षेस्यतस्मिन्नोपजीवस्य ५ भयग्रहयोगोक्तंसर्वमस्मिन् ६ पितृलाभप्राणितोयं ७

भं फलंवेदितव्यमित्यर्थः ॥ अथकेंद्रदशारंभस्थानभेदंदर्शयति ६ लग्नसप्तमयोर्योवलवान्राशि ॥ प्रथमेप्राकप्रत्यन्तं ८।
स्तस्मादयंवक्ष्यमाणदशाक्रमोज्ञेयः तंराशिमारभ्यदशाप्रवर्तनीयेतियावत् तदुक्तंवृद्धैः वलिनः शुक्रराशिनोः केन्द्राख्यांतुदशां
नयेत् पुरुषश्चेत्ततोमेयास्त्रीचेद्दर्पणात्तोनयेत् ॥ अयमर्थः पुरुषोजातकवान्चेल्लुग्नसप्तमयोर्वलवतोदशानेया स्त्रीजातकवती
चेद्दुर्वलवत्सप्तमाद्दशानेयेति ७ केंद्रदशाक्रमभेदानाहसूत्रैः प्रथमेचरराशौलग्नेसप्तमेवासतिवलवल्लुग्नसप्तमान्यतरराशे
रनुत्क्रितमार्गेणदशाक्रमः ॥

स्यात् तत्राप्योजयुग्मपदभेदात्प्राक्प्रत्यक्त्वं क्रमोत्क्रमत्वं प्रथमद्वितीयादिद्वादश्यादिरीत्याज्ञेयमित्यर्थः यत्तु सामान्यपरिभाषातः
प्राक्प्रत्यक्त्वं प्राप्तमेवात्रतत्प्राक्प्रत्यक्त्वपदमनुज्झितक्रमपदमितिपंथेहकं तत्र सामान्यपरिभाषाया दशानयनपरत्वात् नचैवं
सत्यनुज्झितक्रमरूपोर्थोनस्यादितिवाच्यं स्थिरद्वंगयोः षष्ठकेंद्रादिक्रमयोर्वक्ष्यमाणत्वाद त्राक्षेपादिवतत्त्वाभात् अन्यथाला-
घवात्प्रथमेक्रमतद्रूत्येवब्रूयात् अत्रत्यंपंचमेपदक्रमादितिसूत्रोक्तंच प्राक्प्रत्यक्त्वपदं दशाक्रमेण सामान्यपरिभाषाऽप्राप्तौ
लिंगं ८ द्वितीयेस्थिरराशौलग्नेसप्तमेवासतिबलवल्लग्नसप्तमान्यतमराशेः ओजयुग्मपदभेदात्क्रमोत्क्रमाभ्यां रवितःषष्ठष
ष्ठक्रमेणदशाप्रवृत्तिर्ज्ञेयेत्यर्थः ९ तृतीयेद्विस्वभावराशौलग्नेसप्तमेवासतिबलवल्लग्नसप्तमान्यतमराशेश्चतुष्टयादिके

द्वितीयेरवितः ८ पृथक्क्रमेणतृतीयेचतुष्टयादि १० स्वकेंद्रस्थाद्याः स्वामिनोनवांशानां ११ ॥

न्द्रादितः पृथक्क्रमेणलग्नपंचमनवमादितः ओजयुग्मपदभेदात्क्रमोत्क्रमाभ्यांदशाप्रवृत्तिः स्यात्लग्नसप्तमान्यतरकेंद्रा
त्प्रथमंततः पंचमपणफरतः ततोनवमापोक्लिमतोदशाप्रवृत्तिर्ज्ञेयेतियावत् अत्रनवनवाब्दाग्राह्याः एतत्सूत्रत्रयस्यफ
लितार्थोवृद्धैः स्पष्टीकृतः चरेनुज्झितमार्गः स्यात्षष्ठषष्ठादिकाः स्थिरेउभयेकंटकाद्रोयालग्नपंचमभाग्यतः चरस्थिरद्वि
स्वभावेष्वोजेषुप्राक्क्रमोमतः तेष्वेवत्रिषुयुग्मेषुग्राह्यंव्युत्क्रमतोखिलं ओजेषुओजपदेष्वित्यर्थः १२ अथकारककेंद्रा-
दिदशामाह नवांशदशाब्दानांस्वकेंद्रस्थाद्याः कारककेंद्रस्थाद्याराशयः स्वामिनोभवंतिआदौकेंद्रस्थास्ततः ॥ ॥

पणफरस्थास्ततआपोक्लिमस्थास्तत्रापिवलाधिकस्यप्रथममितिक्रमेणसर्वदुर्वलांतंनेयमितियावत् तदुक्तमाद्यैः प्रतिभंनव
वर्षाणिकारकाश्रयराशितः जन्मसंपद्विपत्क्षेमः प्रत्यरिः साधकोवधः मैत्रंपरममैत्रंचेत्येवमंतर्दशानयेदिति किंचस्वकेन्द्रा
स्थाद्याः ग्रहाः नवांशानांनवग्रहदत्तानामब्दानांस्वामिनोभवंतीति अयमप्यर्थः सूत्रकारसंमतएव अन्यथासप्तलाभयोरितिसू
त्रस्यवैयर्थ्यप्रसंगात् अब्दानयनंत्वग्रेवदिष्यति ११ केंद्रदशामपरामाह पितृचतुष्टयेषुलग्नादिकेन्द्रेषुवैषम्यवलाश्रयोऽधिक
वलयुक्तोराशिः प्रथमदशाप्रदःस्थितः पर्यवसितः नवांशानामित्यनुवृत्त्याप्रतिराशिनवनवाब्दादशाब्दाग्राह्याः तथाचकेंद्रपणफरा
पोक्लिमाणांवलाधिकस्यप्रथममितिक्रमेणसर्वदुर्वलांतंदशानेयेति १२ कारकादिग्रहदशाब्दानयनमाह सकारकः तल्लाभयो

**पितृचतुष्टयवैषम्यवलाश्रयःस्थितः १२ सतल्लाभयोरावर्तते १३ स्वामिवलफलानिचप्राग्वत् १४ ॥**

लग्नसप्तमयोरावर्तते परिवर्तते अयमाशयः लग्नात्सप्तमाच्चक्रमोत्क्रमगणनयाकारकपर्यंतंराशिसंख्यायत्राधिकासाब्दरू
पाकारकग्रहदशा अन्येषांतुग्रहात्कारकपर्यंतंविषमसमपदानुरोधेनक्रमव्युत्क्रमगणनयासंख्यासातत्तद्ग्रहाब्दाःकारकयुक्त
ग्रहाणांतुकारकाब्दतुल्याएवाब्दाभवंतीति इयंग्रहदशाद्वैरुक्ता लग्नात्कारकपर्यंतंसंख्यान्यस्यदशाभवेत् कारकस्तथ्युग
म्यादौतत्केंद्रादिस्थितास्ततः दशाक्रमेणविज्ञेयाः शुभाशुभफलप्रदाइति १३ फलमाह दशास्वामिनांराशीनांग्रहाणांचवलानि
फलानिचप्राग्वत् पूर्वोक्तशास्त्रवद्ज्ञेयानीत्यर्थः १४ ॥

अथ मंडूकदशामाह ॥ मंडूकः मंडूकदशा त्रिकूटः चरस्थिरद्विस्वभावात्मकत्रिकूटघटितत्वात्केंद्रादित्रिसमुदायघटितत्वाद्वा त्रिकूटः स्थूलादर्शवैषम्याश्रयः लग्नसप्तमयोर्मध्ये यो बलवान्तदाश्रयो भवति विषमस्य भावो वैषम्यं अधिकबलत्वमिति यावत् अयमाशयः लग्नसप्तमयोर्मध्ये बलिनं राशिमारभ्य दशाप्रवृत्तिः तत्रापि पुरुषश्चेज्जातकवान् तदा लग्नसप्तमयोर्बलवत्तो दशा नेया स्त्री जातकवती चेद्बलवत्सप्तमाद्दशा नेया तदुक्तमाद्यैः बलिनः शुक्रराशितो द्वितीया मंडूकदा दशा पुरुषश्चेत्ततो नेया स्त्री चेद्दर्पणात्तो नयेत् इति केंद्रादिक्रमेण मंडूकवदुत्प्लुत्यपतनान्मंडूकसंज्ञेत्यर्थः तस्मादत्र केंद्रपणफरापोक्लिमक्रमेण तत्रापि बलिनः प्राथम्यमिति रीत्या दशा नेयेति यावत् ॥ प्रतिराशि नवनवाब्दा ग्राह्याः १५ अथ फलमूलदशामाह फलेवक्ष्ये मूलदशा निर्याण

स्थूलादर्शवैषम्याश्रयो मंडूकस्त्रिकूटः १५ निर्याणलाभाद्धि मूलदशा फले १६ पुरुषे समाः सामान्यतः १७

राशेः सप्तमराशितः प्रवृत्ता भवति · मूलदशेति नाममात्रनिर्देशः रुद्रमूलरुद्राश्रयमहेश्वरब्रह्ममारकस्थानादिनिर्याणस्थानबाहुल्येन मूलदशानेकविधा नवनवाब्दा अत्र ग्राह्याः १६ विशेषविधानातिरिक्तसकलदशासाधारण्येन दशारंभे दशाब्दानयने च विशेषमाह सर्वासु दशास्वारंभराशौ पुरुषविषमे सति सामान्यतः आरंभलग्नाद्दशाप्रवृत्तिः सामान्यतः समाः अब्दा नवनववर्षरूपा ग्राह्याः समे सति तु तत्सप्तमान्नवनवाब्दा ग्राह्यास्तस्मादेव दशाप्रवृत्तिर्भवतीत्यर्थः सिद्धमेवतदुक्तं वृद्धैः ओजे लग्नं तदेव स्याद्युग्मे तत्सप्तमं भवेत् दशेजेक्रमतो ह्येया पुंस्येवं क्रमतो मतेति निश्चिंत्य पुरुषे जातकवति आरंभराशितः दशाप्रवृत्तिः स्त्रियां जातके

तुनत्सप्तमाद्दशाप्रवृत्तिः स्यात् तदुक्तं पुरुषश्चेत्ततो नेया स्त्री चेद्दर्पणातो नयेदिति १७ नक्षत्रदशामाह नक्षत्रायुर्दाये विंशोत्तर्यष्टो
त्तर्यादिरूपे समाः अब्दाः सिद्धाः जातकांतरप्रसिद्धा ग्राह्या इत्यर्थः १८ अथ योगार्द्धदशामाह योगार्द्धदशायां प्रतिराशिसमागतच
रदशाब्दस्थिरदशाब्दयोर्योगार्द्धं कर्तव्यं तदेव योगार्द्धदशाब्दाः १९ ॥ योगार्द्धदशारंभराशिमाह १९ एतद्योगार्द्धं स्थूलादर्शवैषम्या
श्रये लग्नसप्तमयोर्बलवदाश्रयं भवति अयमर्थः लग्ने बलवति लग्नाद्दशाप्रवृत्तिः सप्तमे बलिनि तु सप्तमाद्दशाप्रवृत्तिर्विषमे क्रमे
ण समे व्युत्क्रमेण दशाः प्रवर्तनीया इति स्त्रीजातकवती चेद्बलवत्सप्तमाद्दशा नेया पुरुषो जातकवांश्चेद्बलवतो दशा नेयेति उक्तं

सिद्धा उडुदाये १८ जगतस्थिरयोरर्द्धं योगार्द्धे १९ स्थूलादर्शवैषम्याश्रयमेतत् २० कुजादित्रिकूटपद
क्रमेण दृग्दशा २१ मातृधर्मयोः सामान्यं विपरीतमोजकूटयोः २२ ॥ चरार्द्धैः बलिनस्तु दशा नेया राशेर्द्वि शशिसु
क्रयोः स्त्री चेद्दर्पणातो नेया पुरुषश्चेत्ततो नयेदिति २० अथ दृग्दशामाह। कुजादिर्लग्ननवमादित्रिकूटपदक्रमेण दृग्दशा भवति·
आदौ नवमस्य ततो दृष्टिचक्रे सम्मुखराशेः ततः कुत्रचित्क्रमरीत्या कुत्रचिद्व्युत्क्रमरीत्या पंचमस्य ततः कुत्रचित्क्रमेण कुत्रचिद्व्यु
त्क्रमेणैकादशस्य सम्मुखराशेरित्युक्तं तत्र प्रमाणाभावात्पंचमस्या· दौ कुतो न उच्यते दृष्टिविषये आदौ अभिपश्यंत्यृक्षाणि ततः
पार्श्वभे चेति सूत्रस्वारस्यादेव त्रिकूटपदं त्रिराश्यात्मकं पदं ततो दशमस्य तत एकादशस्य दृग्दशा भवति नवमदृग्दशा दशमदृ
ग्दशा एकादशदृग्दशेति फलितार्थः २१ अथौजयुग्मपदभेदेन गणनाक्रममुपदिशति स्पष्टम् २२ ॥ ॥

मातृधर्मयोः पंचमैकादशयोर्गणानायां सामान्यं न कचिदित्यात्मकं सामान्यं सामान्यशास्त्रं ओजकूटयोः ओजपदयोर्विपरीतं ज्ञेयं युग्मे युग्मपदयोर्यथासामान्यं सामान्यमनतिक्रम्य विज्ञेयं तथा चक्रमाद्वृषवृश्चिके चेत्यत्र वृषवृश्चिकयोरोजकूटस्थत्वाद्व्युत्क्रमेण पंचमैकादशौ दृग्योग्यौ सिंहकुंभयोर्युग्मकूटस्थत्वाद्यथासामान्यं व्युत्क्रमेणैव पंचमैकादशौ दृग्योग्यौ भवतः द्विस्वभावे दृग्योग्य पंचमैकादशयोरभावात्॥ दृष्टिचक्रे यत्र यत्र दृष्टिस्तत्रादौ नवमदशानंतरं सप्तमस्य ततो नवमादित्रिके द्विस्वभावराशिदृग्दशायां पार्श्वराशिद्वयदशायां पार्श्वराशिद्वयदशाक्रमस्तु पुंराशिश्चेद्द्विःस्वभावस्तर्हि क्रमेण स्त्रीराशिश्चेद्व्युत्क्रमेण चतुर्थदशा

**यथासामान्यं युग्मे २३ पितृमातृध र्मप्राण्यादिस्त्रिकोणे २५॥**

मोऽग्राह्योऽयं भावः। चरराशिषु क्रमेण पंचमैकादशौ स्थिरराशिषु व्युत्क्रमेण पंचमैकादशौ दृग्योग्यौ भवतस्तथैव पार्श्वराशिदशाक्रमो ज्ञेयः द्विःस्वभावराशिषु आदौ नवमस्य ततः सप्तमस्य ततो विषमश्चेद्द्विःस्वभावस्तर्हि क्रमेण चतुर्थस्य समश्चेत्तदा व्युत्क्रमेण चतुर्थस्य ततस्तथैव दशमस्येति अत्र नवनवाब्दा ग्राह्याः २३ अथ त्रिकोणादशामुपदिशति लग्नपंचमनवमेषु यो राशिर्बलवान्तत्स्त्रिकोणादशारंभः आरंभराशिमारभ्य क्रमोत्क्रमाभ्यां द्वादशराशीनां दशा ज्ञेयाः एतदुक्तं वृद्धैः लग्नत्रिकोणयो राशिर्बलवानुक्तहेतुभिः तदारभ्योन्नयेच्छ्रीमान्स्वरपर्यायवद्दशां युग्मराशिभुवां पुंसामोजं गत्स्त्रीतसम्मुखं ओजराशिभुवां स्त्रीणां ॥

युग्मं ग्रस्तीतसम्मुखं· ओजराशीभुवां पुंसां ग्रस्तीयादोजमेव तु युग्मराशिभुवां स्त्रीणां युग्ममेव समाश्रयेत्॥ क्रमोत्क्रमाभ्यांग
णयेदोजयुग्मेषु राशीषु इतिकथनात्पुरुषे जातकवति क्रमात् स्त्रियां जातकवत्यां तु व्युत्क्रमादित्यर्थः संपन्नः चरपर्यायवद्दश
मितिकथनान्नाथांताः समाद्गुतिरीत्यावर्षाण्यत्रग्राह्याणीत्यर्थः २४ पाकभोगराशीद्दर्शयन्फलमतिदिशति ततत्रिकोणदशायां
द्वारबाह्यराशिभ्यां तद्वत्पूर्वोक्तवत्फलं ज्ञेयमित्यर्थः तदुक्तमाद्यैः तदिदं चरपर्यायस्थिरपर्याययोर्द्वयोः त्रिकोणाख्यदशायां च।
पाकभोगप्रकल्पने पाके भोगे च पापाढ्ये देहपीडा मनोव्यथेति २५ ततत्कारकेभ्यस्तत्तत्स्थानफलमाह ततत्कारकेभ्यो धासगे

तत्रद्वारबाह्याभ्यां तद्वत् २५ धासगे रिकात्पत्नीकरात्कारकैः फलादेशः २६ ताराकोशेमंदाद्योदशेशः
२७ तस्मिन्नुच्चेनीचेवाश्रीमंतः २८ स्वमित्रभे किंचित् २९ दुर्गतोऽपरथा ३०॥ रिकात्पत्नीकरात् सप्त

मतृतीयप्रथमनवमेभ्यो यथायोगं ततत्कारकैः फलादेशः कर्तव्यः अयं भावः सप्तमात्स्त्रीविचारः तृतीयात्कनिष्ठभ्रातुः कारका।
त्स्वस्य नवमात् पितुर्धर्मस्य विचारः कार्यइत्यर्थः २६ नक्षत्रदशामाह॰ जन्मदिनेयच्चंद्रस्य नक्षत्रं तदीयाः सर्वर्क्षरीत्यायाघटि
काः ताद्वादशधा विभज्य प्रथमखंडमारभ्य द्वादशसु खंडेषु लग्नादिद्वादशराशयः क्रमेण गणनीयाः यस्मिन्घटिकामयेखंडे जन्म
स खंडः आदितआरभ्य गणनया जन्मलग्नादितो यद्राशिविशिष्टस्तं राशिमारभ्य क्रमव्युत्क्रमभेदेन द्वादशराशीनां दशा आनेयाद्

अत्रप्रतिराशिनवनवाब्दाग्राह्याः २७ गुणविशेषतःफलंदर्शयतिसूत्रैः सर्वेस्पष्टम् २८ २९ ३० ॥ तस्मिन्तारालग्नेशेउच्चेनीचे वाराशौसतिजातानराः श्रीमंतोभवंति तारा लग्नेशेस्वमित्रराशौसतिकिंचिल्लक्ष्मीवंतोभवंति· अपरथाशत्रुराशौसतिदुर्गतोदरिद्रोभव तीत्यर्थः तदुक्तमाद्यैः जन्मतोरेद्वादशधाविभक्तेयत्रचंद्रमाः लग्नात्तावतिथेराशौन्यसेदाद्यदशाधिपंसयद्युच्चेथवानीचे

स्ववैषम्येयथासंक्रमव्युत्क्रमौ ३१ साम्येविपरीतं ३२ शनौचेत्येके ३३ अंतर्भुक्तंपशयोरेतत् ३४

तदास्माद्राजसेवकः स्वमित्रर्क्षेसुखीशत्रुराशौनिःस्वः समेसमइति ३१ अर्थांतर्दशोप दशयोः संचारविशेषमाहसूत्रैः ३२ ३३ ॥ स्वस्यात्मकारकस्यवैषम्येओजपदत्वेयथास्वंयथाराशिस्वभावंक्रमव्युत्क्रमौज्ञेयौ ओजपदेओजराशिश्चेत्क्रमःयु

क्रम इति साम्ये युग्मपदत्वे विपरीतं युग्मराशौ क्रमः ओजराशौ व्युत्क्रम इति द्वैयंकारके यथा ओजयुग्मपदभेदेन क्रमव्युत्क्रमत
द्विपरीतत्वम् तथांशनावपि वेदितव्यानीत्येके आचार्या वदंति· स्वपदोपादानात्कारकांतर्दशायामुपदशायां चैवेदं बोध्यम् अ
थदशाफलविशेषमाह ३४ शुभयुते धाम्नि राशौ सति तद्राशिदशा शुभा स्यात् ॥ उच्चग्रहयुते राशौ तदधिपे उच्चे वा तद्राशिदशा शुभे

शुभादशा शुभयुते धाम्न्युच्चे वा ३५ अन्यथान्यथा ३६ सिद्धमन्यत् ३७ ॥

त्यर्थः ३५ उच्चमित्रशुभयोगलक्षणगुणाभावे समानीचादियोगसत्वेऽशुभेत्यर्थः ३६ अन्यत्प्रकृतग्रंथानुक्तं सिद्धं शास्त्रांतरत्व
सिद्धं ग्राह्यमित्यर्थः ३७ ॥ इति श्रीनीलकंठज्योतिर्विद्विरचितायां जैमिनीसूत्रव्याख्यायां सुबोधिन्यां द्वितीयाध्यायस्य चतुर्थः पादः स
माप्तिमगात् ॥ २ ॥

